॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२६



॥ श्रीः ॥

# पौरोहित्यकर्मसारः

**टिप्पण्या समलङ्कृतः**

**(प्रथमो भागः)**


विद्यावाचस्पतिना

**पं० श्रीरमाकान्तठक्कुरेण सङ्गृहीतः**

पं० श्रीरामचन्द्रझा व्याकरणाचार्येण संशोधितः







**चौखम्भा संस्कृत संस्थान**

**वाराणसी**

M.Katyayana

वि.सं० २०७२]  मूल्य : रु. २५.०० (प्रथम)  [ ई० २०१५

सम्पूर्ण (१-३) रु. ६०.००



(पुनर्मुद्रणादिकाः सर्वेऽधिकाराः प्रकाशकाधीनाः)

# प्रार्थना

यदस्मिन् भारतभूखण्डेऽतिप्रवलतः श्रौतस्मार्त्तधर्मकर्मानुष्ठानं यथाधिकारमामूर्खपण्डितं स्वीकृतमिति नाविदितं केषाञ्चन विदुषाम्। सोऽयमस्माकं परमो धर्मः। यस्याधुनापि करालवदने कलौ 'श्रीमान् महाराजाधिराजपदविभूषितो जी० सी० ई० के० वी० धर्मरत्नाकरेत्याद्यनेकोपाधिसमलङ्कृतश्च प्रभुवर याचककल्पद्रुम—श्री रमेश्वरसिंहाभिधो रक्षकः। अतो बालानां स्वल्पायासेन कर्मकलापबोधाय 'पौरोहित्यकर्मसारा'भिधो ग्रन्थः सङ्गृह्यते।

ननु सत्सु बहुतरेषु कर्मकाण्डग्रन्थेषु व्यर्थोऽयं प्रयास इति चेदत्रोच्यते—अतोऽप्यधिकविषययुक्ता ग्रन्था विलसन्ति विलसन्तुतराम्, परन्तु ते क्लिष्टतरास्तेष्वल्पधीमतां बोधो दुर्लभोऽत्र स्वल्पश्रमेण बोधः स्यादिति। न च तावतापि लोकानां तेष्वेव प्रवृत्तिः स्यान्नात्रेति वाच्यम्। सितादिभिरौषधैर्दुःखस्योपशमत्वसम्भवे कटुतिक्तौषधेषु कस्यापि प्रवृत्तिर्गरीयसी स्यात्किम्। एतदेव मनसि विधाय श्रमोऽकारि मयेत्यलं प्रपञ्चेन।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

श्रीरमाकान्तस्य

॥ श्री १०८ कङ्काली विजयतेतराम् ॥

# पौरोहित्यकर्मसारः

M. Katyayana

## प्रथमो भागः

### मङ्गलाचरणम्

ध्यायं ध्यायं गुरुं देवं स्मारं स्मारं च कालिकाम्॥
नामं नामं स्वजननीं कारं कारं च सत्कथाम्॥ १॥
प्रणम्य वाङ्मयीं देवीं रमाकान्तेन धीमता॥
क्रियते बालबोधाय ग्रन्थोऽयं नातिविस्तरः॥ २॥

अथ सर्वकर्मणामादिभूतकलशस्थापनविधिः।

स च रात्रौ[1] निषिद्धोऽतो भगवतः श्री १०८ सत्यदेवस्य पूजायां शिष्टमैथिलैर्नाद्रियते। विधिश्च यथा—

उदकेन भूमिमभ्युक्ष्य ॐ कलशाधारशक्ते इहागच्छ इह तिष्ठेत्यावाह्य ॐ कलशाधारशक्तये नम इति पञ्चोपचारैः सम्पूज्य भूमिं स्पृष्ट्वा ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री, पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः। इति मन्त्रेण कलशस्थापनस्थाने भूशुद्धिं कृत्वा ॐ मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषुरीरिषः, मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः स दमित्वा हवामहे। इति मन्त्रेण कलशस्थापनस्थाने गोमयोपलेपनं कृत्वा—

ॐ वेद्याः वेदिः समाप्यते बर्हिषाबर्हिरिन्द्रियम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना। इति गङ्गाजलेन शुद्धिं कृत्वा—

ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानायत्वा व्यानायत्वा दीर्घामनुप्रसितिमायुषेधान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि। इति मन्त्रेण तदुपरि धान्यं यवं वा विकीर्य—

---

1. न रात्रौ स्थापनं कार्यं न च कुम्भाभिषेचनम् इति मत्स्यपुराणधृतनिर्णयसिन्धुवचनात्।

ॐ आजिघ्र कलशं मह्या त्वाविशं त्विन्दवः, पुनरुर्ज्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारापयस्वतीपुनर्मा विशताविशताद्द्रयिः। इति मन्त्रेण यवोपरि लौहभिन्नान्यमव्रणमच्छिद्रमश्यामं दृढं कलशं स्थापयेत्। ततः—

ॐ दधिक्रावणो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनोमुखाकरत् प्रण आयूंषि तारिषत्। इत्यनेन कलशं दध्यक्षतैर्भूषयेत्। ततः—

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्य ऋतसदन्यसि। वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद। इति मन्त्रेण कलशे जलं दत्त्वा।

ॐ सरत्नानि दाशुषे अरातिसहिता भगी भाग्यन्य तत्र मीमहे। इति मन्त्रेण कलशे पञ्च[1] रत्नानि।

ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना।
नमस्ते सर्वदेवानां प्रभुवारुणि सुव्रते॥

इति मन्त्रेण सप्तमृत्तिकाः[2]।

ॐ या ओषधी पूर्वाजाता देवेभ्यस्त्रियुगं पुरा।
मनैनुबभ्रूणामहग्वं शशं धामानि सप्त च॥

इत्यनेन सर्वौषधीः[3]।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥

इति मन्त्रेण गन्धान् दद्यात्।

ॐ याः फलिनीर्य्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूस्तानो मुञ्चन्त्वग्वं हसः। इति मन्त्रेण कलशे पूगीफलं प्रक्षिप्य।

ॐ अम्बे अम्बिके अम्बालिके नमानयति कश्चन। स सस्त्यश्वकः शुभद्रिकां काम्पीलवासिनीम्। इत्यनेन आम्रपल्लवं दद्यात। ततः—

१. पञ्चरत्नं यथा—कनकं हीरकं नीलं पद्मरागं च मौक्तिकम्। पञ्चरत्नमिदं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः। रत्नानां चाप्यभावे तु स्वर्णं कर्षार्धमेव च। सुवर्णस्याप्यभावे तु आज्यं देयं विचक्षणैः॥

२. सप्तमृत्तिकाः—अश्वस्थान, गजस्थान, रथ्या, नदीसङ्गम, ह्रद, गोकुलाहृताः।

३. कुष्ठमांसी हरिद्राभिर्वचाशैलेयचन्दनैः। मुराचन्दकर्पूरैर्मुस्तः सर्वौषधिः स्मृतः॥



ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवानो दूर्वे प्रतनु सहस्रेण शतेन च। इत्यनेन दूर्वादलं प्रक्षिप्य।

ॐ इमम्मे वरुणश्रुधीहवमद्या च मृडयत्वानवस्युराचके। इत्यनेन जलं दद्यात्।

ॐ गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च।
सर्वे समुद्राः सरितः सरांसि जलदायकाः।
आयान्तु यजमानस्य दुरितक्षयकारकाः॥

ॐ आपो हिष्ठामयो भुवः। ॐ तान ऊर्ज्जे दधातन महेरणाय चक्षसे। ॐ यो वः शिवतमोरसः। ॐ तस्य भाजयतेह नः। ॐ उशतीरिव मातरः। ॐ तस्मा अरङ्गमामवो। ॐ यस्य क्षयाय जिन्वथ। ॐ आपो जनयथा च नः। इत्यनेन गङ्गाजलं च दद्यात्। तीर्थानि न्यसेत्। ततः—

ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ व्यानाय स्वाहा। इत्यनेन कलशे ताम्बूलं दत्त्वा।

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्, सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम। इत्यनेन हिरण्यादिकं क्षिपेत्। पञ्चरत्नमिति शेषः।

ॐ युवा सुवासाः परिवीत आगात् स उश्रेयान् भवति जायमानः तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तु। इत्यनेन वस्त्रेण कलशं वेष्टयित्वा, कलशाधिकरणकैकस्मिन् पात्रे 'धान्यमसीति' पूर्वोक्तमन्त्रेण धान्यं दत्त्वा पूर्वदिशि—

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा, अग्निवर्च्चो ज्योतिर्वर्च्चः स्वाहा, सूर्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा, ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा। इत्यनेन प्रज्वलितदीपं निदध्यात्। ततः प्राणप्रतिष्ठां कुर्यात्—ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टम्, यज्ञग्वं समिमं दधातु, विश्वेदेवा स इह मादयन्तामों प्रतिष्ठ। इत्यनेन दध्यक्षताभ्यां कलशं स्पृष्ट्वा।

ॐ कलशस्थितगणेशादिदेवता इह सुप्रतिष्ठिता भवन्त्विति पठित्वा,

तत्र ॐ शान्तिकलशगणेश इहागच्छ इह तिष्ठेत्यावाह्य यथाशक्ति गन्धादिभिः पूजयेत् । इति कलशस्थापनविधिः समाप्तः ॥

अथादावन्त्यावस्थायां विशेषतो वैतरणीदानम् ।

वितरणेन दानेन तीर्यते इति वैतरणी । सा नदी दुर्गन्धा तप्तजला महावेगा अस्थिकेशरक्तपरिपूर्णा यमद्वारे वर्त्तते । तथा यमदग्निराह—

नदी वैतरणी नाम दुर्गन्धा रुधिरावहा ।
उष्णतोया महावेगा अस्थिकेशतरङ्गिणी ॥ इति ।

दानप्रकारश्च—प्राङ्मुख उपविष्टः शुचिराचान्तः ।

ॐ कृष्णगव्यै नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति वारत्रयं गां ब्राह्मणचरणं तत्स्थानापन्नकुशत्रयं वा पुष्पाक्षताभ्यां सम्पूज्य गामभिषिच्य च—

ॐ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
दातारं त्रायते यस्मात्तस्माद्वैतरणी स्मृता ॥ १ ॥
यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।
तां च तर्त्तु ददाम्येनां कृष्णां वैतरणीं च गाम् ॥ २ ॥

इति श्लोकद्वयं पठित्वा कुशत्रयतिलजलान्यादाय ।

ॐ अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुक [1]गोत्रस्य पितुरमुकशर्मणो यमद्वारस्थितवैतरणीनदीसन्तरणकाम इमां कृष्णां गां रुद्रदैवतां यथानामगोत्राय ब्राह्मणायाहं ददे । इति गामुत्सृज्य ॐ अद्य कृतैतत्कृष्णगवीदानप्रतिष्ठार्थमेतावद्-द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । इति दक्षिणां दद्यात् ।

मातरि तु पितुरिति स्थाने मातुरिति पदं देयम् । प्रतिग्रहीतुरुपस्थितौ तु प्रतिग्रहीता गोपुच्छग्रहणं यथाशाखं कामस्तुतिं च कुर्यात् ।

तत्र सामवेदीयस्तु—ॐ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते । इति मन्त्रेण ।

यजुर्वेदीयस्तु—ॐ कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते । इत्यनेन ।

---

1. गोत्रशब्दार्थस्तु–गवते शब्दायते पूर्वपुरुषान् यदिति ।



हस्तोदकपक्षे तु—ॐ गां ददानीति यजमानेनोक्ते, ॐ ददस्वेति ग्रहीतुः प्रतिवचनानन्तरं गां दद्यात् । तद्वाक्ये यथानामेत्यादिस्थानेऽमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । इति वाक्यं दद्यात् । साक्षात् गोरभावे तन्मूल्यं दद्यात् । यथा प्राजापत्यव्रताकरणे आह संवर्त्तः—

प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्य मूल्यं न संशयः ॥

अत्रोत्तममध्यमाधमभेदेन षट्त्रिंशन्मुनिमते धेनुमूल्यमाह—

धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका ।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता ॥

पंचभिः कार्षापणैरिति शेषः । आद्यो महाधनः । कार्षापणः षोडशपणाः । पुराणं कार्षापणम् । अत्र कात्यायनः–मध्यमाभिप्रायेणाह –

द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत् ।

अतो वत्समूल्यं पुराणमेकं गोमूल्यं[1] कार्षापणद्वयं तन्मिलितं कार्षापणत्रयं धेनुमूल्यं सवत्साया गोर्धेनुत्वादिति ॥

वस्तुतस्तु उत्तममध्यमाभिप्रायेणैतद्धेनुमूल्यं गोमूल्यमाह, छंदोगपरिशिष्टे—

'द्वात्रिंशत्पणिका गावश्चतुःकार्षापणोवरः ।' इति ॥ द्वात्रिंशदिति—अष्टाणकमित्यर्थः[2] ।

हस्तोदकदानं तु सर्वथा निषिद्धम् । अत एव शिष्टमैथिलैर्नाद्रियते तत् । तदङ्गत्वेन प्रतिग्रहनिषेधो लिख्यते । तथाहि[3]—

---

1. गोमूल्यं यथाऽऽढ्यानां–१।) सपादरूप्यकम्
 " मध्यमानाम् ।॥) कार्षापणत्रयम्
 " दरिद्राणाम् ।) एक कार्षापणम्

तत्र वाक्यं यथा—ॐ एतावद्द्रव्यमूल्यककृष्णगव्यै नमः । एवंसर्वत्र यथायथमूह्यम् ।

आढ्यादिलक्षणं यथा—

आढ्यः पञ्चशती प्रोक्तस्त्रिशती मध्यमः स्मृतः । पंचाशन्मात्रवृत्तिर्यः स दरिद्रः प्रकीर्त्तितः॥

2. एतन्मते आढ्यानां गोमूल्यम्–१) मध्यमानां गोमूल्यम्–॥) दरिद्राणां प्राग्वत्—।)

3. वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति ।
प्रत्यक्षं लिङ्गमेवेह दातृयाचकयोर्बलम् ॥ १ ॥
दातृहस्तो भवेदूर्ध्वमधस्तिष्ठेत्प्रतिग्रही । यद्दानं प्रतिगृह्णीयात् प्रतिग्राही व्रजत्यधः ॥२॥
प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् । प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति ॥३॥

हेमभूमितिलान् गाश्च अविद्वानाददाति यः ।
भस्मी भवति सोऽह्नाय दातुः स्यान्निष्फलं च तत् ॥ १ ॥
तस्मादविद्वान्नादद्यादल्पशोऽपि प्रतिग्रहम् ।
विषमात्रापरिज्ञानी विषेणाल्पेन नश्यति ॥ २ ॥

अत एव याज्ञवल्क्यः—

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥ ३ ॥

प्रतिग्रहः स्वीकरणम् , द्विजेभ्यो विधिवद्देयं प्रतिग्रह इति यावत् ।

अथ मुमूर्ष्ववस्थाकर्त्तव्यविधिः ।

मुमूर्षुर्गोपीचन्दनलिप्ताङ्गो नवयज्ञोपवीतवस्त्रमाल्यादिभिरलङ्कृतो मुखनिःक्षिप्तकांस्यमणिप्रवालशकलः कुशास्तृतभूमौ दक्षिणशिराः शाययितव्यः, पुरुषसूक्तादिकमुच्चैः श्रावयितव्यः । तत्र च तुलसीवृक्षशालग्रामसन्निधापनं कार्यम् ।

शालग्रामसन्निधापने फलमाह कूर्मपुराणे—

शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।
तत्सन्निधौ त्यजेत्प्राणान् याति विष्णोः परं पदम् ॥

ततो धनञ्जयवायुनिःसरणपर्यन्तं दण्डद्वयं वाससाच्छन्नः स्थापयितव्यः । द्विजशवं शूद्रो न स्पृशेत् ।

ततः शवं वनं नदीतीरं शून्यस्थानं वा नयेत् ततः स्नातः पुत्रादिः शुचिवस्त्रधरः कुशहस्त आचान्तः पूर्वाभिमुख उपविष्टो नूतनमृन्मयभाण्डे जलं कृत्वा शवं दक्षिणशिरसं कृत्वा ।

ॐ गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रं च गङ्गां च यमुनां च सारद्वराम् ॥ १ ॥
कौशिकीं चन्द्रभागां च सर्वपापप्रणाशिनीम् ।
भद्रावकाशां सरयूं गण्डकीं तमसां तथा ॥ २ ॥
धैनवं च वराहं च तीर्थं पिण्डारकं तथा ।
पृथिव्यां यानि तीर्थानि चतुरः सागरांस्तथा ॥ ३ ॥

एतानि तीर्थानि जले ध्यायन्नावाह्य तेन जलेन शवं संस्नाप्य नूतनवस्त्रयुगयज्ञोपवीतपुष्पचन्दनैरलङ्कृत्य श्रेष्ठकाष्ठरचितचितायां कुशानास्तीर्योत्तरशिरसमधोमुखं पुरुषं, स्त्रियश्चोत्तानां शाययेत् । ततोऽपसव्यं कृत्वा वामेन पाणिना दक्षिणाभिमुखः सन्नुल्मुकं गृहीत्वा 'गयादीनीत्युच्चार्य' एतानि तीर्थानि देवाश्चाग्निमुखाः सर्वे कृतस्नानमेनं गतायुषं दहन्त्विति मनसा ध्यात्वा ।



ॐ कृत्वा सुदुष्करं कर्म जानता वाऽप्यजानता ।
मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ॥ १ ॥
धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्वगात्राणि दिव्याँल्लोकान्स गच्छतु ॥ २ ॥

इति श्लोकद्वयं पठित्वा शीघ्रं त्रिः प्रदक्षिणीकृत्य दक्षिणाभिमुखो ज्वलदुल्मुकं शिरोदेशे दद्यात् । ततस्तृणकाष्ठघृतादिकं चितायां निःक्षिप्य कपोतावशेषं दहेत् ।

दाहे शूद्रानीतोऽग्न्यादिरग्राह्यो दोषश्रवणात् तथा मिताक्षरायाम्—

यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च ।
प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते ॥ इति ॥

ततो दाहे वृत्ते प्रादेशप्रमाणाः सप्त पञ्च वा काष्ठिका आदाय चिताग्निं सप्तवारान् पञ्चवारान् वा प्रदक्षिणीकृत्यैकैकक्रमेण—

'ॐ क्रव्यादाय नमः' इत्युक्त्वा शवानुगमनकर्त्तारश्चितायां निःक्षिपेयुः । ततः कुठारेण 'ॐ क्रव्यादाय नमस्तुभ्य' मिति सकृत्पठित्वा चितास्थज्वलद्दारूपरि सप्त पञ्च वा प्रहारा देयाः ।

अथ शवानुगमनकर्त्तारो बालपुरस्सरा वृद्धपश्चिमाश्रितां वामावर्त्तेन परावृत्त्य चितामनवलोकमानाः—

ॐ अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
वैवस्वतो न तृप्यति सुराभिरिव दुर्मतिः ॥

इति यमगाथां गायन्तो जलाशयं गच्छेयुः । तत्रैकवस्त्रधराः प्रकीर्णकेशाः दक्षिणाभिमुखाः । 'अप नः शोशुचदघमि' ति मन्त्रेण वामहस्तानामिकया अप आलोड्य सकृन्निमज्जयेयुः । ततः कृतापसव्याः कुशहस्ता दक्षिणाभिमुखा जले दक्षिणाग्रकुशत्रयोपरि पितृतीर्थेन प्रेताय सतिलतोयाञ्जलित्रयं दद्युः, तद्यथा—

ॐ अद्यामुकगोत्र पितरमुकप्रेत एष तिलतोयाञ्जलिस्ते मया दीयते तत्रोपतिष्ठतामिति । पितृतीर्थश्च यथा—

कनिष्ठातर्ज्जन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ इति

अथोदकादुत्तीर्य शुचौ देशे उपविष्टान् प्रेतसपिण्डान् अन्ये सुहृद इतिहासपुराणादिविदग्धकथाभिः संसारानित्यतां दर्शतन्तोऽपवदेयुः । तथा च—

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
करोति यः स संमूढो जलबुद्बुदसन्निभे ॥ १ ॥
यत्प्रातः संस्कृतं ह्यन्नं सायं तच्च विनश्यति ।
तदीयरससम्पुष्टे काये का नाम नित्यता ॥ २ ॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ३ ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ ४ ॥
श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्या विधानतः ॥ ५ ॥
मा शोकं कुरुताऽनित्ये सर्वस्मिन् क्षणधारिणि ।
एवमस्मिन्निरालम्बे काले सततयायिनि ॥ ६ ॥
न तद्रूपं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवम् ।
ये समर्था जगत्त्राणाः सृष्टिसंहारकारिणः ।
तेऽपि कालेन नीयन्ते कालो हि बलवत्तरः ॥ ७ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
अर्थे दुष्परिहार्येऽस्मिन्नास्ति शोकसहायता ॥ ८ ॥ इति ।

ततो गृहद्वारमागत्य निम्बपत्राणि दन्तैः खण्डयित्वा 'शमी पापं शमयत्विति शमीं स्पृष्ट्वा 'अश्मनि स्थिरो भूयास' मिति पदाऽश्मानं स्पृष्ट्वा 'अग्निः शर्म यच्छतु' इत्यग्निं स्पृष्ट्वा गोमयमुदकं गौरसर्षपांश्च स्पृष्ट्वा बालपुरस्सरा गृहं विशेयुः ।

अथ पिण्डदानक्रमः ।

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षि नासिकास्तु समासतः ॥ १ ॥



गलांसभुजवक्षांसि तृतीयेन तथा क्रमात् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥ २ ॥
जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा ।
षष्ठेन सर्वकर्माणि सप्तमेन तु नाडयः ॥ ३ ॥
दन्तलोमाद्यष्टमेन वीर्यन्तु नवमेन वै ।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ॥ ४ ॥

वाक्यं तु—ॐ अद्यामुकगोत्र पितरमुकप्रेत एष शिरःपूरकः प्रथमः पिण्डस्ते मया दीयते तवोपतिष्ठतामित्यादिवाक्यं स्वयमूह्यम् ।

तत्तद्दिवसोच्चारणपुरःसरं सुस्पष्टं द्वितीयभागे वक्ष्यते ।

अथ श्राद्धशब्दार्थः ।

श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते । अथ वा सम्बोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य हविस्त्यागः श्राद्धमिति ।

तत्र द्विविधं, सामान्यं पार्वणमेकोद्दिष्टमिति । तत्र त्रिपुरुषोद्देशेन यत् क्रियते तत्पार्वणम् । एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टमिति ।

तत्र पिण्डवस्तुफलमाह श्राद्धखण्डे मनुस्मृतौ—

तिल-व्रीहि-यवै-र्माषै-रद्भि-र्मूल-फलेन वा ।
दत्तेन मासं तृप्यन्ति विधिवत् पितरो नृणाम् ॥ १ ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।
[1]औरभ्रेणाथ चतुरः [2]शाकुनेनाथ पञ्च वै ॥ २ ॥
षण्मासांश्छागमांसेन [3]पार्षतेन च सप्त वै ।
अष्टा [4]वेणस्य मांसेन [5]रौरवेण नवैव तु ॥ ३ ॥
दशमासास्तु तृप्यन्ति वाराहमहिषामिषैः ।
शशकूर्मयास्तु मांसेन मासानेकादशैव तु ॥ ४ ॥
संवत्सरं तु गव्येन पयसा पायसेन च ।
वाद्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ५ ॥

वाद्ध्रीणसश्च निगमे व्याख्यातः । तथा हि—

त्रिपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।

---

१. औरभ्रो मेषमांसः । २. शाकुनो द्विजातिभक्ष्यपक्षिमांसः । ३. पृषतश्चित्रमृगस्तन्मांसेन । ४–५. एणो रुरुश्च मृगजातिविशेषाविति बोध्यम् ।

वादुर्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि ॥

नद्यादौ पयः पिबतो यस्य छागस्य त्रीणि जलं स्पृशन्ति, कर्णौ जिह्वा च स छागो वादुर्ध्रीणसः । त्रिभिः पिबतीति त्रिपिब इति विग्रहः ।

अथ सामान्योत्सर्गविधिः ।

एकादशाहे दाता प्राङ्गणे पूर्वाभिमुख उपविश्याचम्य—

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

इति द्विभुजं शङ्खचक्रधरं विष्णुं स्मृत्वाऽऽत्मान द्रव्याणि चाभिषिच्य-

ॐ सोपकरणशय्यायै नमः ३ । इति वारत्रयं सोपकरणशय्यां संपूज्य ॐ ब्राह्मणाय नमः ३ । इति वारत्रयं ब्राह्मणदक्षिणचरणं तत्स्थानापन्न-कुशत्रयं वाऽक्षतादिभिः संपूज्य—( हस्तोदकदाने तु—ॐ सोपकरणशय्यां ददानीति कुशोदकं ब्राह्मणदक्षिणहस्ते दत्त्वा, ॐ ददस्वेति प्रतिवचनानन्त-रमिति शेषः ) कुशत्रयतिलजलान्यादाय—

ॐ अद्यामुकगोत्रस्य [1]पितुरमुकप्रेतस्य स्वर्गकाम इमां सोपकरण-शय्यां विष्णुदैवतां यथानामगोत्राय ब्राह्मणायाहं ददे इत्युत्सृज्य, ॐ अद्य-कृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमेतावद् द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे इति दक्षिणां दद्यात् ।

हस्तोदकदाने तु ।

ॐ अद्येत्यादिविष्णुदैवताममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्य-महं सम्प्रददे । इति ब्राह्मणदक्षिणहस्ते कुशोदकं दद्यात्ततो ग्रहीता स्वस्तीति वदेदेवमेव सर्वत्र वाक्यमूह्यम् ।

दक्षिणा तु दशांशमिता सा च तन्मूल्यनिर्णयेन वस्तुनिर्णयेन वा बोध्या । दक्षिणाया अदाने वृद्धिमाह ब्रह्मवैवर्त्ते प्रकृतिखण्डे—

कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम् ।
तत्कर्मफलमाप्नोति वेदैरुक्तमिदं मुने ॥ १ ॥
कर्त्ता कर्मणि पूर्णे च तत्क्षणं यदि दक्षिणाम् ।
न दद्याद् ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा ॥ २ ॥
मुहूर्त्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम् ।

१. मातरि तु—'अमुकगोत्राया मातुरमुकप्रेतायाः' इति तदतिरिक्ते तु—'मत्पुत्र-त्वकरस्य' मत्पुत्रत्वकर्याः' । इत्यादिवाक्यं संयोज्यम् ।



एकरात्रे व्यतीते तु भवेच्छतगुणा च सा ॥ ३ ॥
कर्म तद् यजमानानां सर्वञ्च निष्फलं भवेत् ।
दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी ॥ ४ ॥
तद् गृहाद् याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम् ।
पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम् ॥ ५ ॥
एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम् ।

तत्रैवान्यदोषमाह—

दाता न दीयते दानं ग्रहीता च न याचते ।
उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः ॥ १ ॥
नार्पयेद् यजमानश्चेद् याचितारञ्च दक्षिणाम् ।
भवेद्ब्रह्मस्वापहारो कुम्भीपाकं व्रजेद् ध्रुवम् ॥ २ ॥

अथ प्रकृतमनुसरामः—

ततः ॐ सतण्डुल-सदर्विक-सचुल्हिक-पाकपात्राय नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति गन्धपुष्पाक्षताभ्यां देयब्राह्मणौ त्रिस्त्रिः सम्पूज्य जलेन सिक्त्वा, कुशत्रयतिलजलान्यादाय ॐ अद्येत्यादि इदं सतण्डुल-सदर्विक-सचुल्हिक-पाकपात्रं विष्णुदैवतं यथानामगोत्राय ब्राह्मणायाहं ददे । इत्युत्सृज्य दक्षिणां दद्यात् ।

ततः ॐ सव्यञ्जनव्यञ्जनपाकपात्राय नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति पूर्ववद्देयब्राह्मणौ सम्पूज्य सिक्त्वा च-ॐ अद्येत्यादि इदं सव्य-ञ्जनपाकपात्रं विष्णुदैवतं यथानामेत्यादि पूर्ववदुत्सृज्य दक्षिणामुत्सृजेत् ।

ततः ॐ सतण्डुलभोजनपात्राय नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति पूर्ववत्सम्पूज्य सिक्त्वा च—ॐ अद्येत्यादि इदं सतण्डुलभोजनपात्रं विष्णुदैवतमिति पूर्ववदुत्सृज्य, दक्षिणां दद्यात् ।

ततः ॐ सव्यञ्जनभोजनपात्राय नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति पूर्ववत् सम्पूज्य सिक्त्वा च—ॐ अद्येत्यादि इदं सव्यञ्जनव्यञ्जन-भोजनपात्रं विष्णुदैवतमिति पूर्ववदुत्सृजेद्दक्षिणां च दद्यात् ।

ततः ॐ सगंगाजलजलपानपात्राय नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति सम्पूज्य सिक्त्वा च—ॐ अद्येत्यादि इदं सगङ्गाजलजलपानपात्रं विष्णुदैवतमिति पूर्ववदुत्सृजेत् । ततः ॐ अद्य कृतैतत्सगङ्गाजलजलपान-

पात्रदानप्रतिष्ठार्थं माषमितं हिरण्यमग्निदैवतं यथानामगोत्रायेति दक्षिणां दद्यात् ।

साधारणजलसत्त्वे तु—सजलजलपानपात्रायेति वाक्यं देयम् ।

ततः ॐ सजलपित्तलघटाय नमः ३ । ॐ ब्राह्मणाय नमः ३ । इति सम्पूज्य सिक्त्वा च—ॐ अद्येत्यादि इदं सजलपित्तलघटं वरुणदैवतमिति पूर्ववदुत्सृज्य, दक्षिणां दद्यात् ।

ततः [1]भक्तपरिवेषणपात्रं विष्णुदैवतम् ॥ [2]दीपाधारपात्रं विष्णुदैवतम् ॥ [3]काचघटितदीपाधारपात्रं विष्णुदैवतम् ॥ वंशनिर्मितच्छत्र मुत्तानाङ्गिरोदैवतम् । उपानहावुत्तानांगिरोदैवते ॥ [4]शिबिकां विष्णुदैवताम् ॥ सोपकरणमिति विशिष्योत्सृजेत् ॥ [5]दोलां विष्णुदैवताम् । सोपकरणगजं प्रजापतिदैवतम् ॥ सोपकरणमश्वं यमदैवतम् । [6]दूष्यं विष्णुदैवतम् । [7]जवनिकां विष्णुदैवताम् । [8]वितानं विष्णुदैवतम् ।

[9]आस्तरणसत्त्वे सास्तरणं वितानमिति वदेत् । वितानशब्दः क्लीबः । पूजा [10]मात्रासहितशालग्रामशिलां विष्णुदैवताम् । दक्षिणां च माषमितं हिरण्यमस्य दद्यात् ।

ततो वर्षभोज्यं-वृक्षम्-पृथिवीं-जलाशयम् । एतानि यथाशक्ति यथाक्रममुत्सृजेत् । अथ गां रुद्रदैवताम् ।

प्रतिग्रहीतुरुपस्थितौ तु—गोपुच्छग्रहणं यथाशाखं कामस्तुतिञ्च कुर्यात् मन्त्रस्तु वैतरणोदाने ४ पृष्ठे द्रष्टव्य इति । साक्षात् गोरभावे पूर्ववन्मूल्यमुत्सृजेत् ।

अथ द्रव्यदैवतानि । विष्णुधर्मोत्तरे—

अभयं सर्वदैवत्यं भूमिर्वै विष्णुदैवता ।
कन्यादासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः ॥ १ ॥
प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः ।
तथा चैकशफं सर्वं कथितं यमदैवतम् ॥ २ ॥
महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतस्तथा ।
रौद्री धेनुर्विनिर्दिष्टा छाग आग्नेय उच्यते ॥ ३ ॥

१. अढिया । २. दीयठा । ३. लालटेन । ४. खडखडिआ । ५. महाफा-चौपहासा । ६. तम्बू । ७. कनात । ८. शामियाना । ९. फर्श । १०. भाजनादि ।



मेषं तु वारुणं विद्यात् वराहो वैष्णवस्तथा ।
आरण्याः पशवः सर्वे कथिता वायुदैवताः ॥ ४ ॥
जलाशयानि सर्वाणि वारिधानी कमण्डलुः ।
कुम्भं च करकं चैव वारुणानि विनिर्दिशेत् ॥ ५ ॥
समुद्रजानि रत्नानि सामुद्रानि तथैव च ।
आग्नेयं कनकं प्रोक्तं सर्वलोहानि चाप्यथ ॥ ६ ॥
प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजाः ।
ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः ॥ ७ ॥
बार्हस्पत्यं स्मृतं वासः सौम्यान्यथ रसानि च ।
पक्षिणश्च तथा सर्वे वायव्याः परिकीर्त्तिताः ॥ ८ ॥
विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च ।
सारस्वतानि ज्ञेयानि पुस्तकाद्यानि पण्डितैः ॥ ९ ॥
सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु दैवतम् ।
द्रुमाणामथ पुष्पाणां शाखानां हरितैः सह ॥ १० ॥
फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः ।
मत्स्यं मांसं विनिर्दिष्टं प्राजापत्यं तथैव च ॥ ११ ॥
छत्रं कृष्णाजिनं शय्यां रथमासनमेव च ।
उपानहौ तथा यानं यच्चान्यत् प्राणवर्जितम् ॥ १२ ॥
उत्तानाङ्गिरसं त्वेतत् प्रतिगृह्णीत मानवः ।
पर्ज्जन्याय तथा सीरं शस्त्रवर्मध्वजादिकम् ॥ १३ ॥
रणोपकरणं सर्वं कथितं शक्रदैवतम् ।
गृहन्तु सर्वदैवत्यं यदनुक्तं द्विजोत्तमाः ॥ १४ ॥
तज्ज्ञेयं विष्णुदैवत्यं सव वा विष्णुदैवतम् ॥

* इति घटस्थापनादिसामान्योत्सर्गान्तविधिः समाप्तः ॥ * ॥

**अथ महागुरुमरणे संवत्सरपर्यन्तं निषिद्धकर्माणि यथा कर्मालोचने—**

महागुरुनिपाते च काम्यं किञ्चिन्न चाचरेत् ।
आर्त्विज्यं ब्रह्मचर्यं च यावत् पूर्णो न वत्सरः ॥ १ ॥
अन्यश्राद्धं वरान्नं च गन्धमाल्यं च मैथुनम् ।
वर्जयेत् गुरुपाते च यावत् पूर्णो न वत्सरः ॥ २ ॥

तीर्थयात्रां विवाहञ्चाध्यापनं तर्पणं तथा ।
संवत्सरं न कुर्वीत महागुरुनिपातने ॥ ३ ॥

महागुरुः = पुरुषस्य-पिता, माता आचार्यश्च । स्त्रियाः = पतिः । अदत्तकन्यायाः = पिता, माता च ।

सपिण्डमरणं प्रकृत्याश्वलायनः—त्रिरात्रमक्षारलवणान्नाशिनः स्युर्दशरात्रं महागुरुषु'। अक्षारलवणं = क्षारमृत्तिकादिकृतलवणभिन्नं। तत्तु सैंधवमतस्तद्भक्षणे न दोषः परन्त्वत्र शिष्टाचारोऽनुसन्धेयः ।

अथ भस्मत्रिपुण्ड्रधारणमाहात्म्यम् ।

स्मृतिसुधाकरे—

श्राद्धे होमे जपे दाने वैश्वदेवे शिवार्चने ।
कृतत्रिपुण्ड्रः पूतात्मा सर्वं भवति चाक्षयम् ॥ १ ॥

भविष्ये—सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥ २ ॥

स्मृतिरत्नावल्याम्—

त्रिपुण्ड्रं ब्राह्मणो विद्वान्मनसापि न लङ्घयेत् ।
स्मृत्या विधीयते यस्मात्तत् त्यागी पतितो भवेत् ॥ ३ ॥
त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम् ।
न तज्ज्ञानं न तद्ध्यानं न तद्दानं जपो न सः ॥ ४ ॥

सङ्ग्रहे—ये भस्मधारिणां दृष्ट्वा वाचा निन्दन्ति मानवाः ।
तेषां शूद्रेण सम्भूतिरनुमेया विपश्चिता ॥ ५ ॥

आचारमयूखे नारदः—

मद्यं पीत्वा गुरुदाराञ्च गत्वा स्वर्णस्तेयं ब्रह्महत्याञ्च कृत्वा ।
[1]भस्मच्छन्नो भस्मशय्याशयानो रुद्रं ध्यायन् मुच्यते पातकेभ्यः ॥ ६ ॥

आह्निकतत्त्वे—

विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥ ७ ॥

१. भस्मधारणप्रसंशावाक्यं यथा—
अहो दूताः ! यूयं सितभसितरुद्राक्षवपुषां, शिवेति स्मर्तॄणां दिशमपि न याताः क्वचिदपि । प्रमादाद् याताश्चेन्मम समधिकारच्युतिरभूत्, स्वदूतानां कर्णे कथयति कृतान्तः प्रतिदिनम् ॥



त्रिपुण्ड्रञ्च-भस्मादिकृतकपालस्थतिर्यग्रेखात्रयमिति ।

अथाचमनप्रकारः—

हृत्कण्ठतालुगाभिस्तु यथामङ्ख्यं द्विजातयः ।
शुध्येरंस्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः ॥ १ ॥
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अङ्गुष्ठेन [1]प्रदेशिन्या घ्राणं चैव मुखं स्पृशेत् ॥ २ ॥
अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रं पुनः पुनः ।
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ॥ ३ ॥
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

फलमाह बृहत्पाराशरे—

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः ॥ १ ॥
गङ्गा च यमुना चैव प्रीयते पारिमार्जनात् ।
[2]नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ २ ॥
( स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ । )
कर्णयुग्मे तथा स्पृष्टे प्रीयेते [3]अनिलानलौ ।
स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्वदेवताः ॥ ३ ॥
मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥ इति ॥

अथ भाद्रशेषदिनत्रयेऽगस्त्यार्घदानमाह—

अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः ।
अर्घं दद्युरगस्त्याय गौडदेशनिवासिनः ॥

अत्र गौडपदर्शनादेव शिष्टमैथिलेषु प्रचुरतया नायं व्यवहारः

मन्त्रत्रयं यथा—

कुम्भयोनिसमुत्पन्न मुनीनां मुनिसत्तम ।
उदयन्ते लङ्काद्वारे अर्घोऽयं प्रतिगृह्यताम् ॥ १ ॥
शंखं पुष्पं फलं तोयं रत्नानि विविधानि च ।
उदयन्ते लङ्काद्वारे अर्घोऽयं प्रतिगृह्यताम् ॥ २ ॥
काशपुष्पप्रतीकाश वह्निमारुतसम्भव ।

१. तर्जन्या । २. अश्विनौ । ३. अनिलो वायुः । अनलोऽग्निः ।

उद्यन्ते लङ्काद्वारे अर्घोऽयं प्रतिगृह्यताम् ॥ ३ ॥

अथ [1]श्रावणीरक्षाबन्धनमन्त्रः ।

येन बद्धो बली राजा दानवेन्द्रो महाबलः ।
तेन त्वामनुबध्नामि रक्षे मा चल मा चल ॥

अथ अनन्तदोरकबन्धनमन्त्रः—

अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव ।
अनन्तरूपे विनियोजयस्व अनन्तसूत्राय नमो नमस्ते ॥ १ ॥

विसर्जनमन्त्रः—

नमः सर्वहितानन्त जगदानन्दकारक ।
जीर्णदोरकमिमं देव विसृजेऽहं त्वदाज्ञया ॥

अथ दूर्वाक्षतदानमन्त्रः—

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रेराजन्यःशूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णूरथेष्ठा सभेयो युवास्य यजमानस्य व्वीरो जायतां निकामे निकामे नः पर्य्यन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।

अतोऽग्रे पौराणिकप्रार्थनामन्त्रः—

ॐ मन्त्रार्थाः सिद्धयः ( सफलाः ) सन्तु पूर्णाः सन्तु मनोरथाः ।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ।

अथ भाद्रामायां कुशोत्पाटनम । तत्र मन्त्रः—

कुशाग्रे वसते रुद्रः कुशमध्ये तु केशवः
कुशमूले वसेद् ब्रह्मा कुशान्मे देहि मेदिनि ! ॥ १ ॥
विरञ्चिना सहोत्पन्नः परमेष्ठी निसर्गजः ।
नुद सर्वाणि पापानि दर्भः स्वस्तिकरो भव ॥ २ ॥
कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्म्मितः पुरा ।
देवपितृहितार्थाय कुशामुत्पाटयाम्यहम् ॥ ३ ॥

---

१. रक्षाबन्धनं भद्रायां न कार्यम् ।
भद्रायांद्वे न कर्त्तव्य श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी
इति सङ्ग्रहोक्तेः । प्रतिपद्युतायां च न कार्यम् ।
भद्रायां दर्शने रक्षा बलिदानं दशासु च । भद्रायां गोकुलक्रीडा देशनाशाय जायते ॥
इति मदनरत्ने ब्रह्मवैवर्त्तात्



निषिद्धकुशानाह, लघुहारीतः—

चिति दर्भाः पथि दर्भाः ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
पिण्डार्थं स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टोधृता ये च तेषां त्यागो विधीयते ॥ इति ॥

अथ पलाण्ड्वादिभक्षणनिषिद्धमाह—याज्ञवल्क्यः—

[1]पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ॥ इति ॥
लशुनं गृञ्जनं चैव जग्ध्वा [2]चान्द्रायणं चरेत् ॥ १ ॥

पारिजाते शातातपः—

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा [3]शुनम् ।
ऊष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ॥
उपायनं पुनः कुर्यान् [4]तप्तकृच्छ्रं मुहुर्मुहुः ।

अथ छन्दोगानां यज्ञोपवीतधारणमन्त्रः—

प्रजापतिर्ऋषिर्गायत्रीच्छन्दो विश्वेदेवा देवता यज्ञोपवीतपरिधाने विनियोगः—ॐ यज्ञोपवीतमसि यज्ञस्यत्वोपवीतेनोपनह्यामि ।

---

१. पलाण्डु-प्याज । विड्वराह-ग्रामसूकर । छत्राक-गोबर-छत्ता-अथवा कुकरौन्धा । ग्रामकुक्कुट-ग्राममुर्गा । लशुन-लहशुन । गृञ्जन-गाजरा ।

२. चान्द्रायणन्तु-मनुः—
एकैकंह्रासयेत पिण्डं कृष्णे शुक्ले च वर्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ।
अर्थः—सायं प्रातः मध्याह्ने स्नानं कृत्वा पूर्णिमायां १५ ग्रासं भक्षयित्वा तदुत्तरं कृष्णपक्षस्य प्रतिपदमारभ्यैकैकं ग्रासह्रासं विधाय चतुर्दश्यामेकं ग्रासं भक्षयित्वा अमावास्यामुपोष्य शुक्लप्रतिपदमारभ्य एकैकग्रासं संवर्द्धय पौर्णमास्यां १५ ग्रासो भक्षणीयो यत्र स चान्द्रायणः ।

३. शुन-कुक्कुर । उष्ट्र-ऊँट । मानुषक—मनुष्य । इभ-हस्ती । अश्व-घोड़ा । रासभी-गदहा । क्षीर-दुग्ध ।

४. तप्तकृच्छ्रन्तु—मनुः—
तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः॥
अर्थः—तप्तकृच्छ्रव्रतं कुर्वन् एकदा स्नानं कृत्वा ३ दिनम् उष्णोदकं, ३ दिनम् उष्णदुग्धं, २ दिनम् उष्णघृतं, ३ दिनम् उष्णवायुं, भक्षयेत् । पराशरः—

षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत् ।
पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते ॥ इति ॥

अथ वाजसनेयिनां यज्ञोपवीतधारणमन्त्रः—

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।

त्यागमन्त्रः—

ॐ एतावद्दिनपर्यन्तं ब्रह्म त्वं धारितं मया ।
जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥

अथ मन्त्रार्थाऽज्ञाने दोषमाह—कूर्मपुराणे—

योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् ।
स च लोके शूद्रसमः पात्रतां न प्रपद्यते ॥

व्यासः—वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥
यथा पशुर्भारवाही न तस्य भजते फलम् ।
द्विजस्तथार्थोऽनभिज्ञो न वेदफलमश्नुते ॥

अथ मण्डलमाह—दीपिकायाम्—

चतुरस्रं त्रिकोणं वा वर्त्तुलं चार्थचन्द्रकम् ।
कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥

अथैकभुक्तमाह—स्कन्दपुराणे—

रात्रिभोजनाभावविशिष्टैकवारभोजनं दिवाभोजनम् । तत्तु—

दिनार्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभुक्तमिति प्रोक्तं रात्रौ तन्न कदाचन ॥

नक्तव्रतन्तु—

दिवाभोजनाभावविशिष्टैकवारभोजनं रात्रिभोजनम् । एतदेव प्रबोधिन्यादौ शिष्टमैथिलेषु व्रतं प्रचलितम् ।

अथैकादशीपारणानिर्णयः—

पारणं तूपवासव्रतानन्तरपूर्वाह्णाधिकरणकप्राथमिकभोजनम् । यथा—

पारणं पावनं पुंसां सर्वपापप्रणाशनम् ।
उपवासाङ्गभूतं च फलदं शुद्धिकारणम् ॥

तत्र विशेषमाह, विष्णुः—

सूर्ये वा सूर्यपुत्रे वा धरणीसुतवासरे ।



निराहारं न कुर्वीत यदीच्छेत्पुत्रजीवनम् ॥
मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
निर्जलायां तथा भीष्मे वारदोषो न विद्यते ॥ इति ॥

तत्र मासभेदेन वस्तुभेदमाह—

[1]गोमूत्रेण च गोमयेन पयसा दध्ना गवां सर्पिषा
तद्दर्भोदककार्त्तवीर्ययवजैश्चूर्णैस्तथा दूर्वया ।
कूष्माण्डेन गुडेन बिल्वतुलसीपत्रेण वा पारणम्
द्वादश्यां गदितं क्रमान्मुनिवरैर्मार्गादितस्तत्फलम् ॥

अथ द्वादशीलङ्घने दोषमाह—स्कान्दे—

पारणाहनि सम्प्राप्ते द्वादशीं यो व्यतिक्रमेत् ।
त्रयोदश्यान्तु भुञ्जानः शतजन्मानि नारकी ॥

अथ कन्यादानात् प्राक्कालाधिकरणककर्त्तव्यमाह—सङ्ग्रहे—

प्राङ्गणे पूर्वाभिमुखाय वराय पश्चिमाभिमुखः कश्चित् कन्याभ्राताऽन्यो वा तत्समः पूगीफलचन्दनदूर्वाक्षतयज्ञोपवीतवस्त्राण्यादाय—

ॐ तस्मिन्कालेऽग्निसान्निध्ये स्नातः स्नाते ह्यरोगिणि ।
अव्यङ्गेऽपतितेऽक्लीबे पिता तुभ्यं प्रदास्यति ॥

इति पठित्वोपनयेत् । ततो वरः—

ॐ ऋतवस्थ ऋतावृध ऋतुष्ठास्थ ऋतावृधः ।
घृतश्चुतो विराजो नाम कामदुघा अक्षीयमाणाः ॥

इति मन्त्रेण दूर्वाक्षतादिकं गृहीत्वा किञ्चित् शिरसि निदध्यात् । तत आचारादष्टौ ब्राह्मणा उदूखले धान्यं दत्त्वा, त्रिःसहस्रशीर्षेत्यादिषोडशमन्त्रान् पठित्वा मुसलेन त्रिरवहत्य तदक्षतादिकमादाय दधियुक्तं कृत्वा आम्रपत्रे निधाय वरदक्षिणकरमूले कङ्कणं बध्नीयुरिति ।

---

१. पयसा-गोदुग्धेन दर्भोदकः-कुशोदकः । कार्त्तवीर्यैस्तिलः । कूष्माण्डेन-सितकुम्हडा इति ख्यातेन । वा कुम्हड इति ख्यातेन । बिल्वतुलसीपत्रयोर्विकल्पः । मार्गादिद्वादशमासेषु क्रमेण—गोमूत्रम् १ । गोमयम् २ । गोदुग्धम् ३ । गोदधि ४ । गोघृतम् ५ । कुशोदकः ६ । तिलचूर्णः ७ । यवचूर्णः ८ । दूर्वा ९ । सितकुम्हडा १० । गुडः ११ । बिल्वपत्रं तुलसीपत्रं वा १ । इति द्वादशवस्तुभिः पारणम् ।

अथ सार्षपतैले दोषाभावमाह–ब्रह्मवैवर्त्ते—

प्रातःस्नाने तथा श्राद्धे पार्वणे व्रतवासरे ।
प्रशस्तं सार्षपं तैलं पक्वतैलं च नारद ।
कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च ।
रवौ श्राद्धे व्रताहे च दुष्टं स्त्रीतिलतैलकम् ॥

अथ पुलिकमूलबन्धनमन्त्रः–कृष्यसारसमुच्चये—

शुचिसितदिनकरवारे करमूले बद्धपुलिकमूलस्य ।
नागारेरिव नागाः प्रयान्ति किल दूरतस्तस्य ॥

आवश्यकतामाह—

अकृत्वा पुलिकैर्बन्धं प्रायश्चित्तीयते नरः ।
चातुर्मास्ये व्यतीते तु मुक्तिस्तस्य कराद्भवेत् ॥

अथ खञ्जनदर्शनफलमाह–सङ्ग्रहे—

वित्तं [1]ब्रह्माणि कार्यसिद्धिरतुला [2]शक्रे [3]हुताशे भयम् ।
[5]याम्यामग्निभयं [4]सुरद्विषि कलिर्लाभः समुद्रालये ॥
[6]वायव्यां वरवस्त्रमन्नमशनं दिव्याङ्गना चोत्तरे ।
[7]ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥
अब्जेषु गोषु गजवाजिमहोरगेषु ।
राज्यप्रदः कुशलदः शुचि [8]शाद्वलेषु ॥
भस्मास्थिकाष्ठ [9]तुषकेशनखेषु दृष्टो ।
दुःखं ददाति बहुशः खलु खञ्जरीटः ॥

अथ दुर्गाऽऽगमनयानफलमाह–ज्योतिषतत्वे—

शशिसूर्यगजारूढा शनिभौमतुरङ्गमा ।
गुरौ शुक्रे च दोलायां बुधे नावाऽऽगमिष्यति ॥
गजे च जलदा देवी छत्रभङ्गस्तुरङ्गमे ।

---

१. ब्रह्मणि—ऊर्ध्वदिशि । २. शक्रे–पूर्वस्यां दिशि । ३. हुताशे—अग्निकोणे । ४. सुरद्विषि दक्षिणपश्चिमकोणे । ५. याम्यां दक्षिणस्यां दिशि । ६. वायव्यां पश्चिमोत्तरकोणे । ७. ऐशान्याम्–उत्तरपूर्वकोणे । ८. शाद्वलः—नवतृणबहुलदेशः । शादो नवतृणं विद्यतेऽत्रेति बोध्यः । ९. तुष इति लोके भुस्सा इति प्रसिद्धः ।



नौकायां सर्वसिद्धिः स्याद्दोलायां मरणं ध्रुवम् ॥

अथ होलिकावायुफलमाह–ज्योतिषशास्त्रे—

पूर्वे वायुर्होलिकायाः प्रजाभूपालयोः सुखम् ।
पलायनं च दुर्भिक्षं दक्षिणे जायते ध्रुवम् ॥
पश्चिमे तृणसम्पत्तिरुत्तरे धान्यसम्भवः ।
यदि खे च शिखावृद्धिर्दुर्गं राज्ञोऽपि संश्रयेत् ॥

पूजामंत्रो यथा

असृक्पाभयसंत्रस्तैः कृता त्वं होलिबालिशैः ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥

अथोल्काभ्रमणम्

तत्रोल्काग्रहणमन्त्रः ब्रह्मपुराणे—

शस्त्राशस्त्रहतानां च भूतानां भूतदर्शयोः ।
उज्ज्वलज्योतिषा देहं निर्दहे व्योमवह्निना ॥

भ्रमणमंत्रः—

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
उज्ज्वलज्ज्योतिषा दग्धास्ते यान्तु परमां गतिम् ॥

विसर्जनमंत्रः—

यमलोकं परित्यज्य आगता ये महालये ।
उज्ज्वलज्ज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते ॥

वित्तादिषु श्रेयस्त्वमाह–मनुस्मृतौ—

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥

श्रवणादौ गृहारम्भार्थतृणकाष्ठादिच्छेदनसंग्रहदक्षिणदिग्गमननिषेधमाह ज्योतिषतत्त्वे—

छेदनं सङ्ग्रहञ्चैव काष्ठादीनां न कारयेत् ।
श्रवणादौ बुधः षट्के न गच्छेद्दक्षिणां दिशम् ॥ १ ॥
अग्निपीडा भयं शोको राजपीडा धनक्षयः ।
संग्रहे तृणकाष्ठानां कृते विश्वादिपञ्चके ॥ २ ॥

यद्यपि पूर्वश्लोकेन श्रवणादौ षट्के दोष आयाति परन्त्वाचारेण द्वितीयश्लोकेन च धनिष्ठादिपञ्चकं त्याज्यमिति ज्योतिषशास्त्रगूढार्थविदः । अन्यच्च—धनिष्ठादौ निषेधो यथा—

धनिष्ठापञ्चकं त्याज्यं तृणकाष्ठादिसंग्रहे ।
त्याज्या दक्षिणदिग्यात्रा गृहसंगोपनादिकम् ॥

आवश्यकतायां तु तत्रापि विशेषमाह–सर्वार्थचिन्तामणौ—

[1]धनिष्ठादौ शतभिषामध्ये पूर्वादौ चोत्तरान्तिके ।
पञ्च पञ्च घटी त्याज्या रेवत्यां सकलं त्यजेत् ॥

अथ सिंहार्के चतुर्थ्यां चन्द्रदर्शनप्रायश्चित्तम्—

सिंहार्कमधिकृत्य ब्रह्मपुराणे—

नारायणोऽभिशप्तश्च निशाकरमरीचिषु ।
स्थितश्चतुर्थ्यामद्यापि मनुष्यानापतेच्च सः ॥
अतश्चतुर्थ्यां चन्द्रं तु प्रमादाद्वीक्ष्य मानवः ।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥

अभिशापो मिथ्यापरीवादविषयीभूतः ।

धात्रेयिकावाक्यं तु—

ॐ सिंहप्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक ! मारोदीस्तव ह्येष स्यमन्तकः ॥

अथ चन्दनधारणमन्त्रः—

ॐ चन्दनं वन्दते नित्यं पवित्रं पापनाशनम् ।
आपदा हरते नित्यं लक्ष्मीर्वसति सर्वदा ॥

अथ भविष्यपुराणोक्तहनुमद्ध्वजदानविधिर्लिख्यते—

तत्र शनि [2]भूमिसुतान्यतरदिवसे चतुर्थी–चतुर्दशी–नवमी–भिन्न-तिथौ कृतनित्यक्रियः [3]सार्धप्रहरोत्तरे [4]नियमितस्थाने गर्त्तं कृत्वा तत्र पूगीफलाक्षतद्रव्याणि निःक्षिप्य तत्र पृथिवीं [5]पञ्चोपचारैः सम्पूज्याम्र-पल्लवमालायुतया हनुमन्मूर्त्तिरचितया पताकया युतं शुचिवंशमारोपयेत् । ततो मृत्तिकया गर्त्तं पूरयित्वा दृढतरं विधायामतण्डुलपिष्टैः सिन्दूरैश्चा-लङ्कृत्य ध्वजं दद्यात् । तत्र सङ्कल्पो यथा—

1. अयम्भाव–धनिष्ठानक्षत्रस्यादौ शतभिषानक्षत्रस्य मध्ये पूर्वभाद्रस्यादौ, उत्तराभाद्रस्यान्ते पञ्च घटी त्याज्या रेवत्यां सकलं मानं त्यजेदिति ।

2. भूमिसुतो–मङ्गलः । 3. सार्धप्रहरोत्तरे—अर्धप्रहरसहितप्रहरोत्तरे ( डेढ प्रहर ) । 4. नियमितस्थाने—पुण्यवृक्षतले देवालयसमीपे—प्राङ्गणे वेति यावत् ।

5. गन्धपुष्पधूपदीपनैवेद्यानि । आचाराद्यथाशक्ति पूजयेत् ।



कुशात्रयतिलजलान्यादाय–ॐ अद्यामुके मास्यमुके पक्षेऽमुकतिथा-वमुकगोत्रस्यामुकशर्मण उपस्थितशरीराविरोधेन सकलैहिकोपद्रवशान्ति-पूर्वकपुत्रपौत्रादिधनधान्यादिसमृद्धिप्राप्तिपूर्वकदीर्घायुष्टबलपुष्टिनैरुज्यप्राप्ति-कामः ( पूर्वाङ्गीकृतस्वाभीष्टसिद्धिकामो वा ) हनुमद्ध्वजदानं तदङ्गत्वेना-ङ्गदेवतापूजनं चाहं करिष्ये, इति ।

ततस्तत्समीपदेशे–ॐ ससीतरामलक्ष्मणाविहागच्छतमिह तिष्ठतमि-त्यावाह्य एतानि पाद्यादीनि ॐ ससीतरामलक्ष्मणाभ्यान्नमः । एवं चन्द-नादिना पूजयेत् । ततः ओं वायो इहागच्छ इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि ओं वायवे नमः । एवं चन्दनादिना पूजयेत् । ततः ओं साधि-दैवतसप्रत्यधिदैवतविनायकादिपंचकसहितनवग्रहा इहागच्छत इह तिष्ठ-तेत्यावाह्य एतानि पाद्यादीनि [1]ओं नवग्रहेभ्यो नमः, एवं चन्दनादिना नवग्रहान् पूजयेत् ।

1. सामगानां नवग्रहमन्त्राः–सर्वस्यादावोमित्युह्यम् । आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन सविता देवो याति भुवनानि पश्यन् ॥ १ ॥ आप्यायस्व स मे तु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ २ ॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥३॥ विवस्व-दुषसाश्चित्रं राधो अमर्त्य आदाशुषे । जातवेदो वहात्वमद्यान्देवाँ उषर्बुधः ॥ ४ ॥ बृहस्पते परिदीया रथेन रक्षोहा मित्राँ अपबाधमानः प्रभञ्जन्सेनाः प्रमृणो युधाय यज्ञस्माकमेध्यविता रथानाम् ॥ ५ ॥ शुक्रन्ते अन्यद्यजतन्ते अन्यद्विषुरूपे अहनी-द्यौरिवासि । विश्वाहि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु ॥ ६ ॥ शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ ७ ॥ कयान-श्चित्र आभुव दूती सदावृधः सखा । कया शचिष्ठया वृता ॥ ८ ॥ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ९ ॥

यजुर्वेदिनां तु—आकृष्णेनेति पूर्ववत् ॥१॥ इमन्देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्र-ममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा ॥ २ ॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्, अपाꣳ रेताꣳसि जिन्वति ॥३॥ उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्त्ते सꣳसृजेथा मयं च । अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ॥४॥ बृहस्पते अतियदर्यो अर्हात् द्युमद्वि-भाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥५॥

ततः ओं [1]इन्द्रादिदशदिक्पाला इहागच्छत इह तिष्ठतेत्यावाह्य, एतानि पाद्यादीनि ओं इन्द्रादिदशदिक्पालेभ्यो नमः । एवं चन्दनादिना पूजयेत् ।

ततो वंशमूले-ओं हनुमन्निहागच्छ इह तिष्ठेत्यावाह्यार्घमादाय—

ओं आञ्जनेय महाबाहो रामकार्यार्थतत्पर ।
गृहाणार्घं मया दत्तं मम कार्यं च साधय ॥

एतानि पाद्यादीनि, इदमनुलेपनम्, इदं रक्तचन्दनम्, इदं सिन्दूरम्, इदमक्षतम् श्रीहनुमते नमः । ततः पुष्पमादाय—

ओं नानागन्धसमायुक्तं देवतानां सुखावहम् ।
गृहाण कुसुमं देव वायुपुत्रः सुखावहः ॥

एतानि पुष्पाणि, इदं बिल्वपत्रम, इदं माल्यम्, इमे यज्ञोपवीते बृहस्पतिदैवते, इदं रक्तवस्त्रं बृहस्पतिदैवतम्, श्रीहनुमते नमः । इतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि, एतानि नानाविधसहितलड्डूकानि इदमाचमनीयम्, एष पुष्पाञ्जलिः ओं हनुमते नमः । पुनस्तत्रैव ओं सपताकध्वज इहागच्छ इह तिष्ठेत्यावाह्यार्घमादाय—

ओं देवासुराणां सर्वेषां मङ्गलोऽयं महाध्वजः ।
गृह्यतां सुखहेतो मे ध्वजः श्रीपवनात्मज ! ॥

एतानि पाद्यादीनि-ओं सपताकध्वजाय नमः । एव चन्दनादिना पूजयेत् ।

ततः ओं आद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रस्यामुकशर्मणः सकलाभीष्टसिद्धिकामोऽमुं सपताकमहाध्वजं विष्णुदैवतं श्री हनुमतेऽहं ददे, इति कुशत्रयतिलजलैरानन्दमनस्क उत्सृजेत् । ततः—

---

अस्मात् परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानꣳशुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोमृतं मधु ॥६॥ शन्नो देवीति पूर्ववत् ॥७॥ आपो भवन्तु पीतये इति विशेषः । कयानश्चित्रेणि पूर्ववत्॥८॥ केतुं कृण्वन्नेति पूर्ववत्॥

नवग्रहाश्च—१ रविः । २ चन्द्रः । ३ भौमः । ४ बुधः । ५ गुरुः । ६ एव शुक्रः । ७ शनैश्चरः । ८ राहुः । ९ केतुः इति ।

१. इन्द्रादिदशदिक्पालाश्च—इन्द्रः । अग्निः । यमः । निर्ऋतिः । वरुणः । वायुः । सोमः । ईशानः । अनन्तः । ब्रह्मा । इति । तत्र पूर्वादिक्रमेण ईशानान्ता अष्टौ दिक्पालाः, ऊर्ध्वदिशि ब्रह्मा अधोदिश्यनन्त इति ।



ओं रूपं देहि जयं देहि भाग्यं भगवन् देहि मे ।
पुत्रं देहि धनं देहि सर्वान् कामान् प्रदेहि मे ॥ १ ॥
अञ्जनीगर्भसम्भूतं वायुपुत्रं महाबलम् ।
सीताशोकविनाशाय सुग्रीवस्य सदा प्रियम् ॥
प्रणमामि सदा भक्त्या सर्वविघ्नविनाशनम् ।
देहि विद्यां यशो देहि कार्यसिद्ध्यै नमाम्यहम् ॥ २ ॥

इत्यनेन दण्डवत्प्रणम्य संपूज्य देवान् विसर्जयेत् । तथा—

ओं पृथिवी पूजितासि क्षमस्व । ओं ससीतारामलक्ष्मणौ पूजितौ स्थः क्षमेयाथां स्वस्थानं गच्छतम् । ओं नवग्रहाः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत । ओं दशदिक्पालाः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत ।

ततः—ओं अद्य कृतैतदङ्गपूजनपूर्वकहनुमद्ध्वजदानप्रतिष्ठार्थमेतावद्-द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे, इति ब्राह्मणाय दक्षिणां दत्वा ब्राह्मणान् भोजयेत् ।

इति हनुमद्ध्वजदानविधिः ।

अथ गायत्रीजपादावेता मुद्राः करणीयाः—

सम्मुखं सम्पुटं चैव विततं विस्तृतं तथा ।
एक-द्वि-त्रिमुखं चैव चतुः पञ्च मुखं तथा ॥
खंमुखाधोमुखं चैव व्यापकाञ्जलिकं तथा ।
शकटं यमपाशं च ग्रथितं सम्मुखोन्मुखम् ॥
प्रलम्बं मुष्टिकं चैव मत्स्यकूर्मवराहकाः ।
सिंहाक्रान्तो महाक्रान्तो मुद्गरं पल्लवं तथा ।
एता मुद्रा न जानाति गायत्री तस्य निष्फला ॥

जपान्ते पुनरपि अष्टौ मुद्रा करणीयाः—

सुरभिर्ज्ञानं वैराग्यं शङ्खो योनिश्च पद्मकम् ।
लिङ्गं निर्वाणमुद्रा च जपान्तेऽष्टौ प्रकीर्त्तिताः ॥

अथ नवान्नभक्षणविचारः-संग्रहे—

[1]वृश्चिके पूर्वभागे तु माघे वापि च फाल्गुने ।
सत्तिथौ शुक्लपक्षे च पञ्चम्यन्ते सितेतरे ॥ १ ॥

---

१. वृश्चिको = मार्गमासः । सत्तिथौ-निषिद्धातिरिक्ततिथौ । सितेतरे-कृष्णपक्षे ।

[1]मृदुक्षिप्रचरर्क्षेषु सत्तनौ सत्क्षणेषु च।
हुत्वा वह्नौ विधानेन नवान्नं भक्षयेत्सुधीः॥ २॥

तच्च वृश्चिकत्रयोदशांशाभ्यन्तरे कार्यम्। यथा—

वृश्चिके पूर्वभागे तु नवान्नं शस्यते बुधैः।
अपरे क्रियमाणे तु धनुष्येव कृतं भवेत्॥
धनुःषु यत्कृतं श्राद्धं मृगनेत्रासु रात्रिषु।
पितरस्तन्न गृह्णन्ति नवान्नामृतकाङ्क्षिणः॥ ३॥

तन्निषेधमाह तत्रैव—

नवान्नं नैव नन्दायां न प्रसुप्ते जनार्दने।
नापराह्णे न [2]चापाऽर्के [3]तुलार्के न कदाचन॥ ४॥
न चैत्रे न त्रयोदश्यां न [4]द्विदैवस्थिते रवौ।
न [5]कुजार्किसिते वारे न तारासु त्रिजन्मसु॥ ५॥

अन्यच्च—

सूर्ये चैव विशाखगे स्मरतिथौ तारे त्रिजन्मान्विते।
नन्दामन्दमहीजकाव्यदिवसे पौषे मधौ कार्त्तिके॥
भेषूग्राहिशिवेषु विष्णुशयने क्रूरये शशिन्यष्टमे।
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्[6]॥ ६॥

अथ उत्तरायणदक्षिणायनयोर्लक्षणमाह—

सूत्रम्—'मकरकर्कटयोः सौम्ययाम्यायनं निरुक्तम्'। व्याख्या—सौम्यायनम् उत्तरायणं तच्च मकरार्कतः (माघतः) मिथुनार्कपर्यन्तम्

पञ्चम्यन्ते पञ्चमीं यावत्। १. मृदुपदेन—मृगशिरा-रेवती-चित्रा-अनुराधाशतभिषेत्येतेषां, चरपदेन स्वाती-पुनर्वसु-श्रवणा-धनिष्ठा-शतभिषेत्येतेषां, क्षिप्रपदेन हस्त-अश्विनी-पुष्य-अभिजित्-इत्येतेषां च ऋक्षाणां नक्षत्राणां ग्रहणम्। सत्तनौ शुभे लग्ने। २. चापेऽर्के-पौषे, ३. तुलार्के-कार्त्तिके, ४. द्विदैवस्थिते-उत्तराषाढासु ५. कुजार्किसिते-मङ्गल-शनि-शुक्रे।

६. अयं समुदायार्थः-रोहिण्यादिद्वयं, पुनर्वस्वादिद्वयम्, उत्तरत्रयं, हस्तादिपञ्चकं, श्रवणात्रिकं, रेवत्यादिद्वयम्, एतानि नक्षत्राणि। शुक्रशनिमङ्गलाभिन्नवाराः। नन्दारिक्तात्रयोदशीभिन्नतिथयः। तृतीयजन्मभिन्नताराः। अष्टमभिन्नचन्द्रमाः। विशाखाभिन्ननक्षत्रस्थसूर्यः। पौषचैत्रकार्त्तिकभिन्नमासाः। शुक्लपक्षः। हरिशयनातिरिक्तकालः। इति प्रशस्तः।



(आषाढं यावत्)। याम्यायनं दक्षिणायनं तच्च श्रावणतः पौषपर्यन्तमिति।

हरौ निद्रिते दक्षिणायने चोद्वाहादीनां निषेधमाह—रत्नसारे—

उद्वाहं सुन्दरीणां व्रतमपि बटोः क्षौरमाद्यं शिशूनां
कूपाद्यर्घप्रदानं सुरनरभवनं माधवे याति निद्राम्।
भानौ याम्यायने वा वनविटपस्थापनं वा सुराणां
कुर्यान्नैव प्रतिष्ठां मुनिभिरिति पुरा कीर्त्तितं यत्पुराणैः॥ १॥

अथ प्रश्नविचारः—

तिथिः प्रहरसंयुक्ता तारकावारमिश्रिता।
अग्निभिस्तु हरेद्भागं शेषं सत्त्वरजस्तमः॥ १॥
सिद्धिस्तात्कालिकी सत्त्वे रजसातिविलम्बिता।
तमसा निष्फलं याति ज्ञातव्यं प्रश्नकोविदैः॥ २॥

अन्यच्च—अङ्कं द्विगुणितं कृत्वा फलनामाक्षरैर्युतम्।
त्रयोदशयुतं कृत्वा नवभिर्भागमाहरेत्॥ ३॥
चतूरसर्वसर्वोङ्का भवन्ति न शुभप्रदाः।
शेषा भू युग रामाः स्यु पञ्चाश्वं नवमाः शुभाः॥ ४॥

अथ शनौ क्षौरकर्मणि शान्तिमन्त्रः—

केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम्।
दितिमदितिं च स्मरतां क्षौरविधौ भवति कल्याणम्॥ १॥

शनिग्रहजन्यदोषोपशान्तये शनिस्तोत्रं यथा—

नीलाञ्जनचयप्रख्यं रविसूनुं महाग्रहम्।
छायाया गर्भसंभूतं वन्दे भक्त्या शनैश्चरम्॥
व्यासेनोक्तमिदं स्तोत्रं यः पठेत्प्रयतो नरः।
दिवा वा यदि वा रात्रौ शान्तिस्तस्य न संशयः॥

इति व्यासकृतं शनिस्तोत्रं संपूर्णम्॥

अपरं च—

ध्वजिनी धामिनी चैव कंकाली कलहप्रिया।
अजामहिषमातङ्गी शनेर्भार्याः प्रकीर्त्तिताः॥
एतासां शनिभार्याणां प्रातरुत्थाय यः पठेत्।
शनैश्चरकृताः पीडा न भवन्ति कदाचन॥ इति॥

अथ चन्द्रोदयविचारः—

[1]तिथिगुणितं रजनीपरिमाणं यमरहितं सहितं सितपक्षे ।
विषयशशाङ्कविभाजितलब्धं भवति विधूदयमस्तमयं च ॥ १ ॥

युगानामायुषो विचारो वक्ष्यतेऽधुना तावत्कलेर्गतायुर्विचार उच्यते—

[2]शाको नवाँ द्रीन्दुकृशानुयुक्तः ।
कलेर्भवत्यब्दगणो व्यतीतः ॥ १ ॥

अथ हवनविधौ शाकल्यनिर्णयः—

तिलार्द्धं तण्डुलाः प्रोक्ताः तण्डुलार्द्धं यवाः स्मृताः ।
यवार्धं शर्करां दद्यात् सर्वार्धञ्च घृतं स्मृतम् ॥ १ ॥

अथ ग्रहाणां होमार्थं समिधो यथा—

अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
औदुम्बरशमीदूर्वाकुशाश्च समिधः क्रमात् ॥ १ ॥

अथ ग्रहाणां भोगकालो यथा—

रविर्मासं निशानाथः सपाददिवसद्वयम् ।
पक्षत्रयं भूमिपुत्रो बुधोऽष्टादशवासरान् ॥ १ ॥
वर्षमेकं सुराचार्यश्चाष्टाविंशदिनं भृगुः ।
शनिस्सार्धद्वयं वर्षं स्वर्भानुः सार्धवत्सरम् ॥ २ ॥

अथ सुस्वप्नविचारः—सुश्रुतसंहितायामेकोनत्रिंशत्तमेऽध्याये—

अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥ १ ॥
समिद्धमग्निं विप्रांश्च निर्मलानि जलानि च ।
पश्येत्कल्याणलाभाय व्याधेरपगमाय च ॥ २ ॥

---

१. रात्रेर्मानस्य यस्यां तिथौ विचारोऽभिलषितस्तया गुणनं कृत्वा सङ्कलित पलाङ्केषु द्वावङ्कौ कृष्णेऽपहृत्य शुक्ले संयोज्य पञ्चदशभिर्भागं कृत्वा लब्धावशिष्ट दण्डपलाभ्यामुदयमस्तं च विधोर्ज्ञेयम ।

२. उदाहरणं यथा—

१०५८
३१७९ शाके ।
५०३७ कलेर्गतायुः ।



मांसं मत्स्यान् स्रजः श्वेतवासांसि च फलानि च ।
लभन्ते धनलाभाय व्याधेरपगमाय च ॥ ३ ॥
महाप्रासादसकलवृक्षवारणपर्वतान् ।
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ ४ ॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ।
तरेत्कल्याणलाभाय व्याधेरपगमाय च ॥ ५ ॥
उरगो वा जलौको[1] वा भ्रमरो वापि यं दशेत् ।
आरोग्यं निर्दिशेत्तस्य धनलाभं च सर्वदा ॥ ६ ॥
एवं रूपान् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः ।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥ ७ ॥
आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् ।
विष्ठानुलेपो रुदितिं मृतिश्च स्वप्नेष्वगम्यागमनं च धन्यम् ॥ ८ ॥

इति दरभङ्गामण्डलान्तर्गतलोहनाग्रामनिवासिना व्याकरणतीर्थोपाधिसमलंकृतेन मिथिलाराजकीयधौतपरीक्षालब्धप्रतिष्ठेन श्रोत्रियवंशोद्भवविद्यावाचस्पतिश्रीरमाकान्तठक्कुरेण संगृहीते पौरोहित्यकर्मसारे सटिप्पणीकः प्रथमो भागः संपूर्णः ।



॥ इति शुभम् ॥

---

१. जलौकः—जलजन्तुः ( जोंक इति भाषायाम् ) ।

मुद्रकः—विद्याविलास प्रेस, वाराणसी—२२१००१

## विषयानुक्रमणिका



---

॥ श्रीः ॥


**काशी संस्कृत ग्रन्थमाला**

२६




M.Katyayana

॥ श्रीः ॥

# पौरोहित्यकर्मसारः

**(द्वितीयभागः—तृतीयभागश्च)**


विद्यावाचस्पतिना-

श्रीरमाकान्तशर्मणा संगृहीतः

पण्डितश्रीरामचन्द्रझाव्याकरणाचार्येण संशोधितः





**चौखम्भा संस्कृत संस्थान**

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० बा० नं. ११३९

के. ३७/११६, गोपाल मन्दिर लेन ( गोलघर समीप मैदागिन )

वाराणसी - २२१००१ ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : चारू प्रिन्टर्स, वाराणसी
संस्करण : षष्टम्, वि० सं० २०५९ सन् २००२
मूल्य : रु. ३५.००

© चौखम्भा संस्कृत संस्थान, वाराणसी
इस ग्रन्थ का परिष्कृत तथा परिवर्धित मूल-पाठ एवं टीका, परिशिष्ट आदि के सर्वाधिकार प्रकाशक के अधीन है।

फोन : ३३३४४५

शाखाएँ :

**चौखम्भा संस्कृत भवन**
पोस्ट बाक्स नं० ११६०, चौक
**वाराणसी-२२१ ००१ (भारत)**
**फोन : ४२०४१४**

**चौखम्भा पब्लिकेशन्स**
४२६२/३ अंसारी रोड, दरियागंज
**नई दिल्ली-११०००२**
**फोन: ३२६८६३९, ३२५९०५०**
**e-mail : chaukhambha@mantramail.com**

## द्रष्टव्यविषयः

इह हि धर्मैकसारभूते भूमण्डले सत्स्वपि बहुतरेषु कर्मकाण्डग्रन्थेषु योऽयं **'पौरोहित्यकर्मसाराख्यो'** ग्रन्थो नूतनः कर्मकाण्डभागजिज्ञासूनां प्रमोदास्पदं वोभवीतितरां यथा नान्यस्तादृशः कश्चनेत्याशासे परन्त्वमुं सपरिशिष्टं प्रथम—द्वितीय—तृतीयभागसंवलितपौरोहित्यकर्मसाराभिधं ग्रन्थं भूयो मुद्रापयितुं यथायथं टिप्पण्यादिभिः परिवर्त्तयितुं विक्रेतुञ्च सर्वदा **श्रीयुत 'बाबूजयकृष्णदासगुप्त** महाशयाः' ( मालिक—चौखम्बा संस्कृत सीरिज आफिस ) सर्वथा प्रभवन्ति स्म। रचयितुः स्थाने निर्दिष्टमन्नामसङ्केतपरिवर्त्तनादृते, किमतिलेखेन सप्रमोदमिति मन्वानः कृती वर्ते।

**श्रीरमाकान्तः**

# प्रार्थना

अस्ति च परमप्रसिद्धः श्रुतिस्मृतिपुराणेतिहासादिषु परमास्तिकग्रन्थेषु च कर्मकाण्डभाग
इति निर्मत्सरविदुषां स्वानुभवरसिकानां च विदितमेव। तदुक्तमेव कर्म कुर्वन्निहोन्नतिं
प्राप्स्यति लोक इति निश्चयप्रचन। 'धर्मो रक्षति रक्षित' इति मनुः' परन्तु—

**आयाते पापिनि युगे सर्वधर्मविलोपिनि।**
**दुराचारे दुःप्रपञ्चे दुष्टकर्मप्रवर्त्तके।**
**नैव कुर्वन्ति लोकेऽस्मिन् कलौ च सुकृतं जनाः।**

इत्यादिकवेरुक्तिमनुसन्धाय कर्मकाण्डस्य प्रचाराय ब्राह्मणसमाजस्योन्नत्यै च साम्प्रतमि-
तस्ततो भ्रमन्तो वर्णाश्रमधर्मान् परिरक्षन्ति स्म श्रीमन्तो जी० सी० आइ० ई० के० बी०
धर्मरत्नाकरेत्याद्यनेकोपाधिविभूषिताः महाराजाधिराजेतिपदालंकृता मिथिलेशश्रीमद्रमेश्वरसिं-
हमहोदयाः। येषामर्थसाहाय्येनाहमपि अधीतव्याकरणको लब्धप्रतिष्ठश्चैतद्ग्रन्थाधीयानानां
लघुकलेवरोऽप्ययं द्वितीयभागः पौरोहित्यकर्मसारस्य कर्मकाण्डविषयाणां संक्षेपेण यावतीया-
र्थानां परिपोषणतया परमोपयोगीति किमूहस्यावसरोऽत्र ? इति बुद्ध्वा ग्रन्थमिमं कुर्वे॥

किं च श्रूयते लोके दृश्यते च शास्त्रेषु यद्वेदमन्त्रार्थज्ञानं विना कर्म कुर्वतोऽपि फलं न
लभन्ते जना इति। तत्र चैवं श्लोका उपलभ्यन्ते, तथा हि—

**योऽधीत्य विधिवद्विप्रो[1] वेदार्थं न विचारयेत्।**
**स च लोके शूद्रसमः पात्रतां न प्रपद्यते॥**
**वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत्।**
**अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा॥**
**पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान्।**
**पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत्॥**

इत्यादि कूर्मपुराणीयव्यासवचनेभ्यो निश्चिनोमि यन्महती वेदार्थज्ञानस्यावश्यकतेति,
तत्रापि च ब्राह्मणानां सन्ध्यावन्दनं मुख्यं कर्म, यथा मनुः—

**न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।**
**स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः॥ इति।**

अतः प्राक् ब्राह्मणमूलभूतसन्ध्यावन्दनमन्त्राणां सरलां व्याख्यामस्मिन्नभिधाय ततश्चाव-
श्यकीयविधिक्रमं, समर्प्य चाशासे यत्सहृदयहृदयानामग्रे सर्वोपयोगिमन्त्राणां व्याख्यां प्रका-
श्य सत्वरं समर्पयिष्यामि, किं बहुनाऽयं च द्वितीयभागः सपरिशिष्टतृतीयभागश्च नवं नवं
फलमर्पयिष्यसि अर्थिभ्योऽतिमात्रं नास्ति तत्र केषामपि सन्देहावकाशः। आशासे चात्र
यदस्मादृशाल्पज्ञजनमतिदोषेण मुद्रणदोषेण वा जनितानि स्खलितानि सुविचार्य शोधयि-
ष्यन्ति विद्वांसोऽलमतिप्रपञ्चेनेति॥

**रमाकान्तस्य**

1. वेदः धर्मब्रह्मप्रतिपादकमपौरुषेयवाक्यम्। अथवा ब्रह्ममुखनिर्गतधर्मशास्त्रज्ञापकशास्त्रमिति

## द्वितीयभागस्थविषयानुक्रमणिका



## तृतीयभागस्थविषयानुक्रमणिका

इति ।

श्री १०८ कङ्काली विजयतेतराम्

# पौरोहित्यकर्मसारः

M. Katyayana

## अथ द्वितीयो भागः

मङ्गलाचरणम् ।

महाकाली विजयते (क) विश्वेशदयिता मुदा ।
देवानुद्धर्त्तुकामा या प्रादुर्भूता पुरा हि सा ॥ १ ॥
ध्यात्वा तत्पादयुगलं स्मृत्वा गुरुपदाम्बुजम् ।
मुद्रितः प्रथमो भागो द्वितीयः क्रियते मुदा ॥ २ ॥

अथोन्नतिनिमित्तभूतं कर्मकाण्डभागोक्तकर्म ब्राह्मणानां परमो धर्मस्तच्च विधिक्रमज्ञानमन्तरेण न सम्भवति। विधिक्रमज्ञानं च धर्मशास्त्राखिलज्ञानमुत व्यवहार(ख)ज्ञानमन्तरेण न संभवति, धर्मशास्त्राखिलज्ञानं चाऽतिदुरूहतया मन्दबुद्धीनां न सम्भवति। अतस्स च विधिः कतिविधः कीदृशः कथं च व्यवहरतीति बोधनायाऽमन्दबुद्धिवेद्योऽयं द्वितीयभाग आरभ्यते—तत्र ब्राह्मणमूलभूतसन्ध्यावन्दनमन्त्रान् तद्विधिं च प्रदर्श्य तेषां व्याख्या च सरलेति कथ्यते। तदङ्गत्वेनापवित्रेति मन्त्रस्य व्याख्या प्रदर्श्यते—

[1]ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ १ ॥

व्याख्या—१. यो जनः, अपवित्रोऽशुचिः, पवित्रो वा शुचिर्वा, सर्वावस्थां गतोऽपि वा यां कांचिदवस्थां प्राप्तोऽपि वा, पुण्डरीकाक्षं कमलसदृशनयनं

(क) विजयते सर्वोत्कर्षेण वर्त्तते, एवं च सर्वान्तःपातित्वेन स्वस्मादप्युत्कर्षबोधनात् 'स्वावधिकोत्कर्षप्रकारकबोधानुकूलव्यापाररूपा नतिरावेद्यते तेन तां प्रति प्रणतोऽस्मि। इति नतिरूपं मङ्गलं 'विजयते' इत्यनेनैव लभ्यते। एवं सर्वत्र।

(ख) व्यवहारशब्दार्थस्तु—
विनानार्थेऽवसंदेहे हरणं हार उच्यते। नानासंदेहहरणाद् व्यवहार इति स्मृतः॥ इति।

इति पठित्वात्मानं पूजोपकरणानि च सिञ्चेत् । (क) ततः—

'अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दो भाववृत्तो देवता अश्वमेधावभृथे विनियोगः ॥

[2]ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत । ततः समुद्रो अर्णवः समुद्रादर्णवादधिसंवत्सरो अजायत । अहोरात्राणि विदधद् विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयद्दिवं च पृथिवीं चान्तरिक्षमथो स्वः । इत्यनेन जलमभिमन्त्र्याचामेत् ॥ ततः—

श्रीविष्णुं, स्मरेत्, ध्यायेत्, स जनः, बाह्याभ्यन्तरः, शुचिः पूतो भवतीत्यर्थः । न चानेन जलप्रोक्षणं न युक्तिसहमिति वाच्यम् । 'आदावात्मानमभिसिञ्चेत्' 'नाप्रोक्षितं किंचित् स्पृशेदि'त्यादेर्जागरूकत्वात्, परम्परातः शिष्टाचाराच्च, न चादौ कथं विष्णोरेव स्मरणमन्यस्यापि संभवात् शैवस्य शिवस्य, शाक्तस्य जगदम्बिकायाः स्मरणावश्यकत्वाच्चेति वाच्यम् ।

शंखचक्रधरं विष्णुं द्विभुजं पीतवाससम् ।
प्रारम्भे कर्मणां विप्रः पुण्डरीकं स्मरेद्धरिम् ॥

इति संग्रहोक्तेः ॥ शिष्टाचाराच्च ॥

१. अघमर्षणसूक्तस्य पापनाशकमन्त्रस्य ( ऋतं चेति मन्त्रस्य ) अघमर्षणऋषिः, अनुष्टुप्छन्दः भाववृत्तः देवता, अश्वमेधावभृथे विनियोगः ॥ एवं सर्वत्र विनियोगार्थं ऊहनीयः ॥

२. सृष्ट्यारम्भसमये ऋतं च सत्यञ्च–आसीत् परब्रह्ममात्रमतिष्ठत्, अनेन महाप्रलयावस्था सूचिता । ततस्तदनन्तरं रात्रिरजायत रात्रिरासीत्, अनेन सकलतमोमयमिति सूचितम् । ततोऽनन्तरम् अभीद्धात् सर्वतोभावेन दीप्तात्, तपसोऽदृष्टात्, अर्णवः जलयुक्तः, समुद्र उदधिरजायत संजातः । ततोऽर्णवात्समुद्रात्, अधीति पश्चादर्थे, धाता स्रष्टा, अजायत, किंभूतो धाता मिषतोऽप्रकटीभवतो, विश्वस्य संसारस्य, वशी निर्माणे प्रभुः, स धाता यथापूर्वं यथा क्रमेण, अहोरात्राणि विदधत् कुर्वाणौ, सूर्याचन्द्रमसौ, अकल्पयत् निर्मितवान्, ततः संवत्सरो अजायत, अथोऽनन्तरं स एव धाता दिवं स्वर्गं, पृथिवीं महीम्, अन्तरिक्षमाकाशं स्वस्तदाख्यलोकम्, अकल्पयत् सृष्टवान् स्वर्लोको नक्षत्रलोकोपरिस्थलोक इत्यर्थः ॥

(क) गायत्र्या शिखां बद्ध्वैव कर्म कुर्यादिति तीर्थचरणाः । विनियोगस्यार्थात् ऋष्यादिस्मरणस्यावश्यकत्वं वक्ष्यते ॥



[1]ॐ 'आपो मामभिरक्षन्तु' इति पठित्वा जलेन शरीरं वेष्टयेत् ॥

अथ प्राणायामं कुर्यात्तच्च विनियोगपाठानन्तरमेव । विनियोगश्च—

ॐकारस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दोऽग्निर्देवता(शुक्लो वर्णः)सर्वकर्मारम्भे विनियोगः । सप्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांस्यग्निवाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः प्राणायामे विनियोगः । गायत्र्या विश्वामित्रऋषिर्गायत्रीच्छन्दः सविता देवता प्राणायामे विनियोगः । शिरसः प्रजापतिर्ऋषिर्ब्रह्माऽग्निवायुसूर्या देवताः प्राणायामे विनियोगः ॥ इति पठित्वा ।

[2]ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ॐआपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ इति त्रिभिः पठित्वा, पूरक–कुम्भक-रेचकाख्यान् प्राणायामान् यथाक्रमं कुर्यात् ॥ विधिश्च यथा—

पूरके—(क)दक्षिणहस्तांगुष्ठेन दक्षिणनासापुटं निरुध्य वामनासापुटेन शनैः शनैर्वायुमाकृष्य सर्वनाडीः पूरयन् नाभौ शङ्खचक्रधरं नीलाब्जदलश्यामं चतुर्भुजं पुण्डरीकाक्षं विष्णुं ध्यायेत् ॥

१. आपो जलानि, ता माम्, अभि सर्वतो भावेन रक्षन्तु विघ्ने इति शेषः ॥ इति मन्त्रं पठन् शरीरतश्चतुर्दिक्षु जलं क्षिपेदिति भावः ॥

२. तत् तस्य, भर्गस्तेजः धीमहि चिन्तयामः तस्य कस्य सवितुः सर्वपदार्थानां प्रसवितुः, किंभूतस्य देवस्य दीप्तिक्रीडादियुक्तस्य, तं कं यो भर्गो, नोस्माकं धियो बुद्धीः प्रचोदयात् धर्मार्थकाममोक्षेषु प्रेरयति । किंभूतं भर्गं वरेण्यं प्रार्थनीयमुपासनीयमिति यावत् । एवं गायत्र्या भर्गस्य च माहात्म्यमुपवर्ण्य पुनस्तस्यैव माहात्म्यं वर्णयति—किं भूतं भर्गं भूरादिसप्तलोकं व्याप्य तिष्ठन्तम्, भूर्भूमिः, भुवोऽन्तरिक्षं, स्वर्द्यौः, महस्तदाख्यलोकः, जनः जनलोकः, तपस्तदाख्यलोकः, सत्यं तदाख्यलोकः, पुनः किंभूतम् आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वः, एतद्रूपम् । अयं भावः–आपः जलस्वरूपः, ज्योतिस्तेजोरूपः, रसः रसस्वरूपः, अमृतं जीवाधारस्वरूपामृतरूपः, ब्रह्मस्वरूपः शेषं तूक्तत्वान्नेहोच्यते तदित्यर्थः ॥

(क) अत्र यद्यपि दक्षिणेति पदानुपादानेपि दक्षिणेति बोधः स्यादेवालं दक्षिणपदोपादानेनेति, एवमेव सर्वत्र । तथा हि'–कर्मोपदिश्यते यत्र कर्त्तुरङ्गं न चोच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः' ॥ इति संग्रहः ।

कुम्भके—अङ्गुष्ठेन मध्यमानामिकाभ्यां च नासापुटद्वयं निरुध्य श्वासमत्यजन् हृदि चतुर्मुखं रक्तवर्णं कमलासनं प्रसन्नमुखं ब्रह्माणं चिन्तयेत् ॥

रेचके—ललाटे शुद्धस्फटिकसङ्काशं त्रिनयनं शिवं ध्यायन् दक्षिणनासापुटेन शनैर्वायुं त्यजेत् ॥ ततः स्वस्थो भूत्वाऽऽचम्य(क)मार्जनादिकं कुर्यात् । तथा हि ओमिति प्रथमम् । ॐ भूर्भुवः स्वरिति द्वितीयम् ।

[1]ॐ (ख)तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इति तृतीयम् ।

[2]ॐ आपोहिष्ठामयोभुवस्ता न ऊर्ज्जे दधातन महेरणाय चक्षसे

अथेमे श्लोकाः संगृह्यन्ते, याज्ञवल्क्ये—

सविता सर्वभूतानां सर्वभावान् प्रसूयते ।
सवनात् पावनाच्चैव सविता तेन गद्यते ॥ १ ॥
दीप्यते क्रीडते यस्माद् द्योतते रोचते दिवि ।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ २ ॥
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ।
भ्राजते यत्स्वरूपेण तस्माद् भर्गः स उच्यते ॥ ३ ॥

अत्र यद्यपि सवितुर्भर्ग इति सवितृभर्गयोर्गायत्रीमन्त्रे भिन्नता प्रतीयते, परन्तु परमार्थचिन्तायां सवितृभर्गयोर्भेदो न विद्यते, तयोरद्वैतमेव, तथा च 'राहोः शिर' इतिवत् षष्ठी न भेदसाधिकेति सुधियो विभावयन्तु ॥

१. गायत्रीमन्त्रव्याख्या सावित्रीव्याख्यायां द्रष्टव्या ॥

२. तच्छब्दबलाद्यच्छब्दमध्याहृत्य व्याख्यायते आप इति संबोधने हे आपः ! या यूयं, मयोभुवः सुखभावयित्र्यः, स्थ भवथ, ता यूयं नोऽस्मान्, ऊर्ज्जे अन्नाय दधातन स्थापयत ॥ यथा वयं सर्वस्यान्नादेः भोजका भवेम तथा कुरुतेति भावः । किञ्च महे महते, रणाय रमणीयाय चक्षसे ब्रह्मदर्शनाय दधातन ॥ मय इति सुखनाम ॥ हिशब्दो यस्मादर्थे ॥

(क) मार्जनं च वामहस्ततले जलं धृत्वा तज्ज जलं दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां किञ्चित्प्रतिमन्त्रान्ते ऊर्ध्वं नीत्वा शिरोदेशे क्षिपेदिति तीर्थप्रभृतयः ॥



[1]ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः ॥

[2]ॐ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः ॥ इति चतुर्थम् ॥

ततः करतलस्थजलेन नासां संयोज्य (क) 'अघमर्षणेति विनियोगपाठानन्तरम् 'ओम् ऋतं चेति मन्त्रं जप्त्वा तज्जलमधः क्षिपेत् । ततः पुनः करतले जलं धृत्वा (ख)—

[3]ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥

इत्युक्त्वाऽऽचामेत् । ततो गायत्र्या सूर्यायार्घं दत्त्वा प्रातः सायं संध्ययोः कृताञ्जलिर्मध्याह्ने तूर्ध्वहस्तः सूर्याभिमुखः सूर्यमुपतिष्ठेत्

१. हे आपः ? वः युष्माकं यश्च शिवतमः कल्याणतमो रसः, इह संसारे वर्त्तते, इति शेषस्तस्य रसस्य नोऽस्मान् भाजयत, भागिनः कुरुत । उशतीः कामयमाना मातर इव । अयं भावः, यथा सन्ततेः कल्याणकामयमाना मातरः स्तन्यस्यागरसैस्तं भावयेयुस्तथाऽस्मान् कुरुतेति ॥

२. हे आपः वो युष्माकं तस्मै तस्मिन् रसे अरं तृप्तिमलम्, गमाम गच्छाम । तत्र रसे नोस्मान् जनयथा भोक्तृत्वेन परिकल्पयथ, यस्य रसस्य क्षयाय क्षये स्थाने जिन्वथ प्रीणयथ, ब्रह्मादिस्तम्बपर्यन्तमिति शेषः । तस्मै इति क्षयाय इति सप्तम्यर्थे चतुर्थी, युष्मत्सम्बन्धिनो यस्य रसस्य स्थाने यूयं जगत् प्रीणयथ, तस्य विषये वयं तृप्तिं गच्छामः, यूयं चास्मान् तद्रसभोक्तृत्वेन जनयथेति ॥

३. हे आपस्त्वं भूतेष्वन्तश्चरसि चरथ, गुहायां कन्दरायां विश्वतोमुखः, विश्वतो विश्वस्मिन् मुखं संसरणं यस्या इत्यर्थः । त्वं यज्ञस्त्वं वषट्कारः, त्वमेव ज्योतिः, रसः, अमृतं तत्स्वरूप इत्यर्थः ॥

(क) योगियाज्ञवल्क्यः—
'आर्षश्छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ १ ॥
अविदित्वा तु यः कुर्याद्याजनाध्यापनजपम् ।
होममन्तर्ज्जलादीनि तस्य चाल्पं फलं भवेत्' इति ॥ २ ॥

(ख) अत्राप ऋष्यादिस्मरणं भवत्येवेति तीर्थप्रभृतयः यथा—'अन्तश्चरसीति तिरश्चीन-ऋषिरनुष्टुप्छन्दः आपो देवता आचमने विनियोगः ॥

तथा हि—

[१]ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥

[२]ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

[३]ॐ उद्वयं तमसस्परिज्योतिः पश्यन्त उत्तरं स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

इत्येतैः प्रातः सायंसंध्ययोः ॥

मध्याह्ने तु—ॐ उदुत्यम्०। ॐ चित्रं देवानाम्।

[४]ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः, पितरं च प्रयन्त्स्वः ॥

[५]अपत्ये तायवो यथा नक्षत्रायन्त्यक्तुभिः। सूराय विश्वचक्षसे ॥

---

१. केतवः किरणाः, विश्वस्य संसारस्य, दृशे दर्शनाय, त्यं तं, देवं क्रीडादियुक्तं, जातवेदसमग्नितेजोमयं सूर्यमुद्वहन्ति ऊर्ध्वं नयन्ति ॥

२. असौ सूर्यश्चित्रमाश्चर्यं यथोदगात्; उदितो बभूव, किंभूतः मित्रस्य वरुणस्याग्नेश्चक्षुरक्षिरूपः पुनः किंभूतः देवानामुक्तातिरिक्तदेवानामनीकं समूहः। तथा द्यावापृथिवी, अन्तरिक्षं स्वर्गमर्त्याकाशम्, आप्राः पूरितवान् स्वकिरणसमूहेनेति शेषः। पुनः किंभूतः जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा, अयं भावः स्थावरजङ्गमात्मकसकलसंसारमयोऽयमेव सूर्य इति ॥

३. वयं सूर्यं देवमुदगन्म उद्गच्छामः, किंभूता वयम् स्वः स्वर्लोकं परि सर्वतोभावेन पश्यन्तः, पुनः किंभूताः देवत्राः अयमत्र समासः, देवेन सूर्येण त्राणं येषां ते इति बोध्यः ॥

स्वः किंभूतं तमसः भूर्लोकादुत्तरमूर्ध्वस्थितम्। किंभूतं सूर्यं ज्योतिस्तत्स्वरूपं पुनः किंभूतमुत्तमं सर्वेषां ज्योतिषामग्न्यादीनामुत्कृष्टमित्यर्थः ॥

४. पृश्निः क्षीणदेहोऽनूरुः (अरुणः) अक्रमीत् आक्रान्तवान्, तदनु अहं गौः किरणरूपी आयम् आगतवानस्मि, ततः पुरः स्वस्थानात् स्वः स्वर्गं प्रयन् गच्छन् किरणात्मनेति शेषः, अहं मातरमदितिं पितरं च कश्यपं तत्रासदं प्राप्तवानस्मीति सूर्येणोच्यते ॥

५. यत्रा सारथिना त्यक्तुभिरतिजवात् प्राप्तदेशगमनशीलैरश्वैरयं सूर्य-



[१]तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य विश्वमाभासि रोचनम् ॥

[२]ॐ उद्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः पश्यञ्जन्मानि सूर्य ॥

इत्येतैरुपस्थानं भवति ॥

ततः प्रातः सायंसन्ध्ययोरासीनो मध्याह्ने चोत्तिष्ठन् सूर्याभिमुखः दशकृत्वोऽष्टोत्तरशतकृत्वः सहस्रकृत्वो वा यथाशक्ति सप्रणवां सव्याहृतिं गायत्रीं जपेत् ॥ यथा—

(क) ॐ भूः हृदयाय नमः। ॐ भुवः शिरसे स्वाहा। ॐ स्वः शिखायै वषट्। ॐ भूर्भुवः स्वः कवचाय हुँ। ॐ भूर्भुवः स्वर्नेत्रायवौषट्। ॐ भूर्भुवः स्वः अस्त्राय फट्। इति षडङ्गन्यासानन्तरं (ख) हस्ततले जलं कृत्वा।

आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि।
गायत्रि च्छन्दसां मातर्जपे मे सन्निधीभव ॥

इत्यावाह्य जलं त्यक्त्वा कृताञ्जलिः—

---

भक्तः सूराय सूर्याय, विश्वचक्षसे जगदवलोकयित्रे न पत्येत न नीयेत इति न, अपि तु नीयेत यथा आयवः। यथा प्राणिनां जीवितकालाः ज्योतिःपथादागत्य सूर्यसारथिना तद्वाहैः सूर्यसमीपं नीयन्ते तथेति भावः ॥

१. हे सूर्य! त्वं तरणिरसि तारकोऽसि, तथा विश्वदर्शकोऽसि। संसारप्रकाशकोऽसि, ज्योतिष्कृदसि तालोककोसि भवसि, तथा विश्वं संसारमाभासि दीपयसि किं भूतं विश्वं रोचनं तव सम्पर्काद्दीप्यमानमित्यर्थः ॥

२. हे सूर्य! पृथ्वहाः पृथुवासरः (पृथुहेति पाठान्तरे पृथुगमनः) त्वम्, अक्तुभिः कुटिलगमनैरश्वैरुदेषि, किंकुर्वन् द्यां दिवं, रजः भूतलसन्निविष्टं मिमानः परिविन्दन्, तथा जन्मानि जीवानामुत्पत्तीः पश्यन्नवलोकयन्सन्नित्यर्थः ॥

---

(क) ओं हृदयाय नमः, ओं भूः शिरसे स्वाहा, ओं भुवः शिखायै वषट्, ओं स्वः कवचाय हुँ, ओं भूर्भुवः स्वर्नेत्राभ्यां वौषट्, ओं भूर्भुवः स्वः अस्त्राय फट्। इत्येव समीचीनः पाठः। इति संशोधकः।

(ख) षडङ्गन्यासानन्तरं प्रथमम् ऋष्यादिस्मरणम्, ततो गायत्र्या ध्यानम्, ततश्च आवाहनमिति शिष्टाचारः। इति संशोधकः।

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च संयुता ॥
आदित्यमण्डलान्तःस्था ब्रह्मलोकगता तथा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ इति ।

गायत्रीं ध्यात्वा, ॐकारस्य ब्रह्मा ऋषिर्गायत्रीछन्दोऽग्निर्देवता जपे विनियोगः ॥ व्याहृतित्रयस्य प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्निवाय्वादित्या देवता जपे विनियोगः ॥ गायत्र्या विश्वामित्रऋषिर्गायत्रीछन्दः सविता देवता जपे विनियोगः । इति ऋष्यादीन् स्मृत्वा प्रथमभागोक्तमुद्रां विधाय गायत्रीं (क) यथाशक्ति जप्त्वा (ख) पुनरप्यष्टौ मुद्राः कृत्वा (ग) ।

ॐउत्तरे शिखरे जाते भूम्यां पर्वतवासिनि ।
ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम् ॥ इति ।

जलेन विसर्ज्य ततोऽर्घपात्रेणाञ्जलिना वा रक्तचन्दनमिश्रितजलं गृहीत्वा ।

ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥

एषोऽर्घः भगवते श्रीसूर्याय नमः, इति वारत्रयं सूर्यायार्घं दद्यात् प्रणमेच्चेति छन्दोगानां सन्ध्यावन्दनविधिः ॥

---

(क) सप्रणव–सव्याहृति–गायत्रीमन्त्रम् । तच्च —

ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् , ओम् ॥ इति संशोधकः ।

(ख) मौनी भूत्वा जपेत् ॥ न मौनस्य लोपे कथं पुनः कार्यमिति वाच्यं वैष्णवमन्त्रं स्मरेदित्युक्तत्वात् । यथाऽह काशीनाथोपाध्यायः—

नाप्रोक्षितं स्पृशेद्वस्तु न वदेन्मानुषीं गिरम् ।
न चोद्वीक्षेत भुञ्जानां न चैवाश्रूणि पातयेत् ॥

दैवे पित्र्ये च सर्वत्र जपहोमादिकर्मसु । मौनं कुर्यात्प्रयत्नेन सकलं फलमाप्नुयात् ॥
यदि मौनस्य लोपः स्याज्जपहोमार्चनादिषु । व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

अतोऽग्रे सूर्योपस्थानटिप्पण्यां स्फुटीभविष्यति ॥

(ग) 'ओं गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥' इति मन्त्रेण जपं समर्प्य प्रणम्य च । इति संशोधकः ।



अथ वाजसनेयिनां संध्योपासनविधिः ।

गायत्र्या शिखां बद्ध्वा । 'अघमर्षणसूक्तस्येत्या (क) रभ्य मथो स्वः' इत्यन्तं पठित्वाचामेत् । ततो हि छन्दोगवत् ।

ॐ 'आपो मामभिरक्षन्तु' इति वारिणाऽत्मानं वेष्टयित्वा रक्षां कुर्य्यात् ॥ ततः—

ॐ कारस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दोऽग्निर्देवता शुक्लो वर्णः सर्वकर्म्मारम्भे विनियोगः । इत्यादि पूर्ववत् विनियोगपाठानन्तरं पूरककुम्भक-रेचकाख्यान् प्राणायामान् कुर्यात्तत्र तत्र ध्यानं च पूर्ववत् ॥ ततः प्रातःकाले—

सूर्यश्च मेति ब्रह्मा ऋषिः प्रकृतिश्छन्दः सूर्यो देवता अपामुपस्पर्शने विनियोगः ।

[1]ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किंचिद्दुरितं मयि इदमहम्मामममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा । इत्याचामेत् ॥ मध्याह्ने तु—

[2]आपः पुनन्त्विति विष्णुर्ऋषिरनुष्टुपछन्दः । आपो देवता अपामुपस्पर्शने विनियोगः ॥

---

१. मा मां, सूर्यश्च, मन्युर्यज्ञः क्रोधो वा, मन्युपतयश्च यज्ञपतयः—क्रोधपतय इन्द्रियाणि वा, मन्युकृतेभ्यः पापेभ्यः असाज्ञ्यज्ञकृतेभ्यः क्रोधकृतेभ्यो वा, रक्षन्ताम् । किं च यत्पापं मनसा वाचा हस्ताभ्यां पद्भ्याम् उदरेण (ख) शिश्ना राज्याऽकार्षं कृतवानस्मि ।

तत्पापं रात्रिरवलुम्पतु नाशयतु, अहः पाठे अहः अवलुम्पत्विति बोध्यः, किंच यत्किंचिद्दुरितं मयि मदाश्रितमन्यदपि पापं तस्माद्रक्षन्ताम् । हे आपस्तत कृत्स्नमिदं पापमहम् अमृतयोनौ मोक्षकारणे ज्योतिषि तेजःस्वरूपे सूर्ये जुहोमि । स्वाहेत्यस्य सुहुतं भवतीत्यर्थः ।

२. आपो जलानि, पृथिवीं पुनन्तु पवित्रीकुर्वन्तु । अद्भिः पूता सती

---

(क) व्याख्या तु छन्दोगप्रकरणे द्रष्टव्या । मन्त्रोपि तथैव विस्तरभिया पुनर्नोच्यते ।

(ख) शिश्ना-शिश्नेन-भाषायां लिङ्ग इति ख्यातेन ।

ॐ आपः पुनन्तु पृथ्वीं पृथ्वी पूता पुनातु मां पुनन्तु ब्रह्मणस्पति-ब्रह्मपूता पुनातु मां यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम सर्वं पुनन्तु मा मापोऽमसतां च प्रतिग्रह२ स्वाहा ॥ इत्याचामेत् ॥ सायाह्ने च—

'अग्निश्च मेति रुद्र ऋषिः प्रकृतिश्छन्दोऽग्निर्देवता अपामुपस्पर्शने विनियोगः ।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत्किंचिद्दुरितं मयि इदमहम्माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ इत्याचामेत् ॥

अथापो हिष्ठेत्यादिभिः सप्तभिः पदैः शिरसि अष्टमेन भूमौ नवमेन पुनः शिरसि कुशाग्रेण तदभावेऽनामिकाङ्गुष्ठाभ्यां जलं क्षिपेत् ॥ तत्र मन्त्राः—

२ॐ आपो हि ष्ठा मयोभुवः ॥ ॐ ता न ऊर्जे दधातन ॥
ॐ महेरणाय चक्षसे ॥ ॐ यो वः शिवतमो रसः ॥
ॐ तस्य भाजयते हनः ॥ ॐ उशतीरिव मातरः ॥
ॐ तस्मा अरङ्ग मामव ॥ ॐ यस्य क्षयाय जिन्वथ ॥
ॐ आपो जनयथा च नः ॥

ततः—द्रुपदादिवेति कोकिलो राजपुत्र ऋषिरनुष्टुप् छन्दः आपो देवता सौत्रामण्यवभृथे विनियोगः ।

---

पृथ्वी मां पुनातु । किं च ता आपः ब्रह्मणस्पतिं ज्ञानस्य पतिं पुनन्तु ब्रह्मणस्पतिरित्यत्र द्वितीयार्थे प्रथमा । ब्रह्म पूता पूतं सन्मां पुनातु पूतमित्यर्थेऽत्र पूतेति लिङ्गव्यत्ययेन । किं चापः उच्छिष्टमपावनम् अभोज्यं निन्दितभोज्यं यत्, यद्वा दुश्चरितमसदाचरणं तत्सर्वं यत्पापं तत्र तत्र मा मां पुनन्तु पावयन्तु । द्वितीयमामित्यादरार्थे ॥ तदा असतामप्रतिग्राह्याणां प्रतिग्रहं च तत्र मामिति ।

१. अग्निः, मन्युः, मन्युपतयः, मा मां, मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यत् मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्नाऽह्ना पापमकार्षं तत्पापम् अहः अवलुम्पतु नाशयतु । यत्किंचिद् दुरितं मयि तदिदम् हे आपः ! अहं ज्योतिषि अमृतयोनौ सत्ये ब्रह्मणि जुहोमीत्यर्थः । शेषं पूर्ववत् ॥

२. अस्य व्याख्या छन्दोगकृत्ये द्रष्टव्या ॥



१ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ इति मन्त्रेण वारत्रयं शिरोमार्जनं कुर्यात् ॥

ततः करस्थं जलं नासिकायां संयोज्य 'अघमर्षणे'त्यारभ्य 'मथो-स्वः' इत्यन्तं पठित्वाऽधः क्षिपेत् ॥

ततो हस्तौ प्रक्षाल्य हस्ततले जलं कृत्वा 'अन्तश्चरसीति तिरश्चीन-ऋषिरनुष्टुपछन्दः आपो देवता आचमने विनियोगः ।

ॐ अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ।

ब्रह्मभूर्भुवः स्वरोम् ॥ इत्याचामेत् ॥

तत उत्थाय गायत्र्या सूर्यायार्घं दत्वा प्रातः सायं कृताञ्जलिर्मध्याह्ने ऊर्ध्वबाहुः सूर्यमुपतिष्ठेत् (क) तथा हि—

उद्वय ( न्त ) मिति हिरण्यस्तूप ऋषिरनुष्टुप्छन्दः, सूर्यो देवता सूर्योपस्थाने विनियोगः ।

ॐ उद्वयंतमसस्परिस्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

उदुत्यमिति प्रस्कण्व ऋषिर्गायत्री छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ।

ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

चित्रमिति कौत्स ऋषिस्त्रिष्टुप् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ।

---

१. आपः जलानि मा माम् एनसः पापात्, शुन्धन्तु शोधयन्तु, कथमिव द्रुपदात् तद्विशिष्टात्, मुमूचानः बहिर्भवन्, स्विन्न इव । अयं भावः आतपो यथा द्रुपदं न स्पृशति, तथा मां पापं न स्पृशत्विति ॥ पुनः स्नातो मलादिव, यथा स्नातः मलान्मुक्तो भवति, पवित्रेण पूतमाज्यमिव । यथा आज्यं पवित्रेण पूतं भवति तथेत्यर्थः ।

---

( क ) यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ इति ।

ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवीरन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥

तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिरक्षरातीतपुर उष्णिक्छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ।

ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इत्युपस्थायासने उपविश्य (क) षडङ्गन्यासं कुर्यात् ॥ ततः (ख)—

तेजोऽसीति देवा ऋषयः शुक्रं दैवतं गायत्री च्छन्दो गायत्र्या विनियोगः ।

[1]ॐ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ इति गायत्र्या आवाहनं कृत्वा,—

परोरजस इति विमल ऋषिरनुष्टुप्छन्दः परमात्मा देवता गायत्र्युपस्थाने विनियोगः ।

[2]ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शिताय पदाय परोरजसे (ग) ॥ इत्युपस्थाय पूर्ववत्

१. गायत्रीं स्तौति त्वं तेजः, असि, शुक्रमसि, अमृतमसि, धाम गृहमसि नाम अभिधानमसि, यत् देवानाम् अनाधृष्टं सर्वोत्कृष्टं प्रियं तत्त्वमेवासि देवयजनं मन्त्रादितत्त्वं त्वमेवासीत्यर्थः ॥

२. त्वं गायत्र्यसि अन्वर्थाभिधासि, (गायन्तं त्रायते इति गायत्री) एकपदी, द्विपदी, त्रिपदी, चतुष्पदीति तस्याः स्वरूपकथनम्, अपदसि (न ज्ञायते इत्यपत्)।

( क ) 'ओं हृदयाय नमः' इत्यादि मन्त्रेण ।

( ख ) ततः = 'षडङ्गन्यासानन्तरम्—' ओंकारस्येत्यादि ८ पृष्ठस्थमन्त्रेण ऋष्यादिस्मरणं, 'श्वेतवर्णा' इत्यादि मन्त्रेण गायत्र्या ध्यानं च कृत्वा. ततः 'तेजोऽसी'ति मन्त्रं पठेदिति-संशोधकः ।

( ग ) 'परोरजसे' इत्यनन्तरं—'सावदो मा प्रापत्' इत्यधिकः पाठः । आह्निकपद्धतावुपलभ्यते ।

उपस्थाय = गायत्रीं ध्यात्वा,—'ओं आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रि च्छन्दसां मातर्जपे मे सन्निधीभव' इति मन्त्रेणाऽऽवाह्य—'ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यं



ऋष्यादीन् स्मृत्वा मुद्राः कृत्वा यथाशक्ति गायत्रीं (क) जप्त्वा पुनः मुद्राः कुर्यात् ॥

ततश्च तां विसर्ज्य सूर्याय पूर्ववदर्घत्रयं दत्त्वा यथाशक्ति कर्म कुर्यादिति ।

दरभंगा-मण्डलान्तर्गतलोहनाग्रामनिवासिना मि० श्री० परीक्षालब्ध-प्रतिष्ठेन व्याकरणतीर्थोपाधिसमलंकृतेन ठक्कुरोपाह्वश्रीरमाकान्तशर्मणा संग्रहीते पौरोहित्यकर्मसारे संध्यादर्शो नाम प्रथमः परिच्छेदः समाप्तः ॥

---

अथ पूजाधिकारिताप्रयोजकदेवषट्कपूजानिर्णयः ।

तथा च ब्रह्मवैवर्त्ते प्रकृतिखण्डे—

गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम् ।
संपूज्य देवषट्कं च सोऽधिकारी च पूजने ॥

फलमाह तत्रैव—

गणेशं विघ्ननाशाय निष्पापाय दिवाकरम् ।
वह्निं शुद्धाय विष्णुं च मुक्तये पूजयेन्नरः ॥

एतदेवाह—नहि पद्यसे, किं च ते तुरीयाय पदाय ब्रह्मविष्णुशिवभिन्नाय परब्रह्मरूपाय नमोस्तु, किंभूताय पदाय दर्शिताय दर्शनीयाय ज्ञानेनेति शेषः, पुनः परोरजसे रजसः परभूताय शुद्धपरब्रह्मस्वरूपायेत्यर्थः ॥

ॐ इति पं० श्रीरमाकान्तठक्कुरेण विरचिता सरला व्याख्या समाप्ता ॐ

भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओं' इति सप्रणव-सव्याहृति-गायत्रीं दशवारं जप्त्वा—'ओं गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि' ॥ इति मन्त्रेण जपं समर्प्य प्रणम्य च—'ओं उत्तरे शिखरे जाते भूम्यां पर्वतवासिनि । ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम्' ॥ इति मन्त्रेण गायत्रीं विसर्ज्य—'ओं नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥ एषोर्घः ओं भगवते श्रीसूर्याय नमः' इति मन्त्रेण सूर्यायाऽर्घं दत्त्वा यथाशक्ति कर्म कुर्यात् । इति संशोधकः ।

( क ) 'कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् । गायत्र्यग्निमुखो प्रोक्ता तस्मादुत्थाय तां जपेदि'ति संध्यादर्शस्य टिप्पणी संपूर्णा ।

शिवं ज्ञानाय ज्ञानेशं शिवां च बुद्धिवृद्धये ।
संपूज्य तान् लभेत् प्राप्तौ विपरीतमतोऽन्यथा ॥

तत्र पूर्वापरीभावस्तु—
सर्वादौ सूर्यपूजा (क) ततो गणपतिपूजा, ततोऽग्निपूजा, ततो दुर्गापूजा, ततः शिवपूजा, ततो विष्णुपूजा कार्या ॥

अथ पञ्चोपचार-दशोपचार-षोडशोपचाराः ।

[1]गन्धः-पुष्पम्-धूपः-दीपः-नैवेद्यमिति पञ्चोपचाराः ।

[2]अर्घः-पाद्यम्-आचमनीयम्-मधुपर्कः (ख) पुनराचमनम्—गन्धः-पुष्पं-धूपः-दीपः-नैवेद्यमिति दशोपचाराः ॥

[3]आसनं-स्वागतम्-अर्घ्यम्-पाद्यम्-आचमनीयकम्-मधुपर्कः-पुनराचमनम्-स्नानं-वसनम्-आभरणं—गन्धः-पुष्पं-धूपः-दीपः-नैवेद्यं-प्रार्थनेति षोडशोपचाराः (*) ।

---

१. 'गन्धपुष्पे तथा धूपो दीपो नैवेद्यमेव चे'ति संग्रहः ॥

२. अर्घ्यपाद्याचमनीयमधुपर्काचमनानि च ।
गंधादिपंचकं चेति उपचारा दशोदिताः ॥

३. आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् ।
मधुपर्काचमस्नानवसनाभरणानि च ॥
गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथे'ति संग्रहः ।

---

(क) यथा देवमयत्वाच्च तरणिर्लोकपूजितः । तथा धूपोपहारैश्च पूजयेत् प्रथमं रविम् ॥
अपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत् । न तद्भूतकृतं पाद्यं संप्रतीक्षन्ति देवताः ॥
इति स्कन्दपुराणात्प्रथमं सूर्यपूजा कार्या, ततो विघ्ननाशकत्वेन गणपतिपूजा । अत ऊर्ध्वं मूलक्रमेण तत्तन्नामोच्चारणपूर्वकं पूजा कार्येति तीर्थठक्कुरः ॥

(ख) मधुपर्कस्तु दधिघृतजलमधुसितासमूहः कांस्यपात्रस्थः कांस्यपात्रेण पिहितः । यथाऽऽचारादर्शे—
दधिसर्पिर्जलं क्षौद्रं सितैताभिश्च पञ्चभिः । प्रोच्यते मधुपर्कस्तु सर्वदेवौघतुष्टये ॥
प्रमाणन्तु—
जलं तु सर्वतः स्वल्पं सिता दधि घृतं समम् । सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ॥
अयञ्च मधुपर्कः देवानां पूजने एवेति शिष्टमैथिलाः ॥

(*) पूजनविधान अस्मत्प्रकाशित 'संक्षिप्ताह्निकपद्धति' में देखिये । प्रकाशक



अथ माघशुक्लपञ्चम्यां सरस्वतीपूजनम् ।

नारदं प्रति नारायणवाक्यं यथा—

शृणु नारद वक्ष्यामि कण्वशाखोक्तपद्धतिम् ।
जगन्मातुः सरस्वत्याः पूजां विधिसमन्विताम् ॥ १ ॥
माघस्य शुक्लपञ्चम्यां विद्यारम्भदिनेऽपि च ।
पूर्वेऽह्नि समयं कृत्वा तत्राह्नि संयतः शुचिः ॥ २ ॥
स्नात्वा नित्यक्रियाः कृत्वा घटं संस्थाप्य भक्तितः ।
स्वशाखोक्तविधानेन तान्त्रिकेणाथवा पुनः ॥ ३ ॥
गणेशं पूर्वमभ्यर्च्य ततोऽभीष्टां प्रपूजयेदिति ॥

अभीष्टां सरस्वतीमित्यर्थः ॥ अथ पूजाप्रकारः—

सूर्यादिपञ्चदेवताः सम्पूज्य विष्णुं पूजयेत् । ततः संकल्पं कुर्यात्-कुशत्रयतिलजलान्यादाय ॐ अद्य माघे मासि शुक्ले पक्षे पञ्चम्यां तिथावमुकगोत्रस्य (क) मम श्री अमुकशर्मण उपस्थितशरीराविरोधेन दीर्घायुष्ट्वबलपुष्टिनैरुज्यप्राप्तिपूर्वकनिर्विघ्नतया सकलशास्त्रज्ञानप्राप्तिपूर्वक-तज्जन्याखण्डयशोलाभप्राप्तिकामो गणेशपूजनपूर्वकबीजमन्त्रोच्चारण-पूर्वकश्रीसरस्वतीपूजनं यथाशक्ति गन्धपुष्पधूपदीपनैवेद्यादिभिरहं करिष्ये तदङ्गत्वेन कलशस्थापनञ्च करिष्ये, इति ।

ततः प्रथमभागोक्त (ख) वैदिकविधिना घटं (ग) संस्थाप्य तत्र घटे पञ्चोपचारेण गणेशं संपूज्य श्री १०८ सरस्वतीं वक्ष्यमाणरीत्या पूजयेत् ।

यथा—सरस्वतीं शुक्लवर्णां सस्मितां सुमनोहराम् ।
कोटिचन्द्रप्रभामुष्टपुष्टश्रीयुक्तविग्रहाम् ॥
वह्निशुद्धांशुकाधानां वीणापुस्तकधारिणीम् ।
रत्नसारेन्द्रनिर्माणनवभूषणभूषिताम् ॥

---

(क) अध्यापकच्छात्रसमूहकर्तृकपूजायां माघे मासि शुक्ले पक्षे पञ्चम्यां तिथौ नाना-गोत्राणां नानानामधेयानामध्यापकानां छात्राणां चोपस्थितशरीराविरोधेनेति विशेषः ।

(ख) वैदिकविधिनेत्यस्यायं भावः, पूजा वैदिकविधिना वक्ष्यते तदङ्गभूतघटसंस्थापनमपि तेनैव कार्यमिति ॥

(ग) पुस्तकोपरि पूजायां तु घटस्थापनस्य नावश्यकतेति तीर्थः ।

सुपूजितां सुरगणैर्ब्रह्मविष्णुशिवादिभिः ।
वन्दे भक्त्या वन्दितां च मुनीन्द्रमनुमानवैः ॥

इति तां ध्यात्वा ॐ ऐं ह्रीं श्रीं सरस्वति इहागच्छ इह तिष्ठेति पुष्पाक्षताभ्यामावाह्य षोडशोपचारेण पूजयेत् । तस्या वेदे तन्त्रे यानि प्रशस्तानि नैवेद्यान्युक्तानि तानीहोपन्यस्यन्ते सर्वाणि च ॐ श्रीं ह्रीं सरस्वत्यै स्वाहा' इत्यष्टाक्षरमन्त्रेणैव समर्पयेत् ॥

यथा—(क) नवनीतं दधि क्षीरं लाजांश्च तिललड्डुकम् ।
इक्षुमिक्षुरसं शुक्लवर्णं पक्वगुडं तथा ॥ १ ॥
[1]स्वस्तिकं शर्कराशुक्लधान्यस्याक्षतमक्षतम् ।
अस्विन्नशुक्लधान्यस्य पृथुकं शुक्लमोदकम् ॥ २ ॥
घृतसैन्धवसंयुक्तं हविष्यान्नं यथोदितम् ।
यवगोधूमचूर्णानां पिष्टकं घृतसंयुतम् ॥ ३ ॥
पिष्टकं स्वस्तिकस्यापि पक्वरम्भाफलस्य च ।
[2]परमान्नं च सघृतं मिष्टान्नं च सुधोपमम् ॥ ४ ॥
नारिकेलं तदुदकं कसेरुं[3] मूलमार्द्रकम् ।
पक्वरम्भाफलं चारु[4] श्रीफलं बदरीफलम् ॥ ५ ॥
कालदेशोद्भवं (ख) चारुफलं शुक्लं च संस्कृतम् ।
सुगन्धं शुक्लपुष्पं च सुगन्धं शुक्लचन्दनम् ॥ ६ ॥

१. स्वस्तिकं पिष्टघृतयुक्तमन्नं,-शर्करा-शक्कर इति भाषा, शुक्लधान्यस्याक्षतमक्षतं-शुक्लधान्याक्षततण्डुलम्, पृथुकम् अरवाचूडा इति भाषा, शुक्लमोदकं स्वच्छहलुआ इति भाषा । ('पृथुकम्' इत्यनेन 'गुडमिलितार्द्रामतण्डुलम्' इति स्कान्दे दृश्यते । लोके तु 'चौरठ' इति शब्देन व्यवह्रियते । इति संशोधकः ) ।

२. परमान्नं पायसं = तस्मै इति भाषा ॥

३. मूलं-मूलकं मुरई इति भाषा ॥ आर्द्रकं मूलविशेषः-आदी इति भाषा ॥

४. श्रीफलं-बेल इति भाषा ॥

(क) नवनीतं नेनु इति भाषा, क्षीरं दुग्ध इति भाषा, लाजान् लावा इतिभाषा, इक्षु-कुसिआर, ऊख इति भाषा, शुक्लवर्णं पक्वगुडं मिसरी इति भाषा ॥

(ख) यथाकालं यथादेशोद्भवं शुक्लवर्णं सुसंस्कृतमन्यत्फलमित्यर्थः ॥



नवीनं शुक्लवस्त्रं च शङ्खं च सुन्दरं मुने ।
माल्यं च शुक्लपुष्पाणां (क) शुक्लहारं च भूषणम् ॥ ७ ॥

अथ स्पष्टप्रतिपत्तये पुनर्नामानि प्रदर्श्यन्ते--

नवनीतं-दधि-क्षीरं-लाजान्-तिललड्डुकान्-इक्षुम्-इक्षुरसम्-शुक्लवर्णपक्वगुडम्-मधु-स्वस्तिकं-शर्करा-शुक्लधान्याक्षतमक्षतम्-पृथुकं-शुक्लमोदकं-घृतसैन्धवसंयुक्तहविष्यान्नं-घृतसंयुक्तयवचूर्णपिष्टक-घृतसंयुक्तगोधूमचूर्णपिष्टकं-स्वस्तिकपिष्टकम्-पक्वरम्भाफलस्य पिष्टकं सघृतं परमान्नं-मिष्टान्नं-नारिकेलं नारिकेलोदकं कसेरुं-मूलम्-आर्द्रकम्-पक्वरम्भाफलं-चारुश्रीफलं-बदरीफलं-कालदेशोद्भवं चारु संस्कृतं शुक्लफलं-सुगन्धं शुक्लपुष्पं-सुगन्धं शुक्लचन्दनं-नवीनं शुक्लवस्त्रं-सुन्दरं शङ्खं-शुक्लपुष्पमाल्यं शुक्लहारं-सुन्दरभूषणमित्यादि दत्त्वा नीराजनं कुर्यात् ॥

ततः कवचादीन् पठेत्—

भृगुरुवाच—ॐ ब्रह्मन्ब्रह्मविदां श्रेष्ठ ब्रह्मज्ञानविशारद ।
सर्वज्ञ सर्वजनक सर्वेश सर्वपूजित ।
सरस्वत्याश्च कवचं ब्रूहि विश्वजयं प्रभो ।
अयातयामं मन्त्राणां समूहैः संयुतं परम् ॥

ब्रह्मोवाच-शृणु वत्स प्रवक्ष्यामि कवचं सर्वकामदम् ।
श्रुतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम् ॥
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने ।
रासेश्वरेण विभुना रासे वै रासमण्डले ॥
अतीव गोपनीयं च कल्पवृक्षसमं परम् ।
अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम् ॥
यद्धृत्वा भगवाञ्छुक्रः सर्वदैत्येषु पूजितः ।
यद्धृत्वा पठनाद् ब्रह्मन्बुद्धिमांश्च बृहस्पतिः ॥
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिको मुनिः ।
स्वायंभुवो मनुश्चैव यद्धृत्वा सर्वपूजितः ॥

(क) शुक्लहारः मुक्तामाला ॥

कणादो गौतमः कण्वः पाणिनिः शाकटायनः ।
ग्रन्थं चकार यद्धृत्वा दक्षः कात्यायनः स्वयम् ॥
धृत्वा वेदविभागं च पुराणान्यखिलानि च ।
चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम् ॥
शातातपश्च संवर्त्तो वशिष्ठश्च पराशरः ।
यद्धृत्वा पठनाद् ग्रन्थं याज्ञवल्क्यश्चकार सः ॥
ऋष्यशृङ्गो भरद्वाजश्चास्तिको देवलस्तथा ।
जैगीषव्यो ययातिश्च धृत्वा सर्वत्र पूजिताः ॥
कवचस्यास्य विप्रेन्द्र ऋषिरेव प्रजापतिः ।
स्वयं छन्दश्च बृहती देवता शारदाम्बिका ॥
सर्वतत्त्वपरिज्ञाने सर्वार्थसाधनेषु च ।
कवितासु च सर्वासु विनियोगः प्रकीर्त्तितः ॥
ॐ श्रीं ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वतः ।
श्रीं वाग्देवतायै स्वाहा भालं[1] मे सर्वदाऽवतु ॥
ॐ ह्रीं सरस्वत्यै स्वाहेति श्रोत्रे पातु निरन्तरम् ।
ॐ श्रीं ह्रीं भगवत्यै सरस्वत्यै स्वाहा नेत्रयुग्मं सदाऽवतु ॥
ॐ ऐं ह्रीं वाग्वादिन्यै स्वाहा नासां मे सर्वदाऽवतु ।
ॐ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा चोष्ठं सदाऽवतु ॥
ॐ श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपंक्तिं सदावतु ।
ॐ ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदावतु ॥
ॐ श्रीं श्रीं पातु मे ग्रीवां स्कन्धं मे श्रीं सदावतु ।
ॐ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदावतु ॥
ॐ ह्रीं विद्याधिस्वरूपायै स्वाहा मे पातु नाभिकाम् ।
ॐ ह्रीं क्लीं वाण्यै स्वाहेति मम हस्तौ सदावतु ॥
ॐ सर्ववर्णात्मिकायै पादयुग्मं सदावतु ॥
ॐ वागधिष्ठातृदेव्यै स्वाहा सर्वं सदावतु ॥
ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदावतु ।
ॐ सर्वजिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु ॥

१. भालं कपालमिति ।



ॐ ऐं ह्रीं क्लीं सरस्वत्यै बुधजनन्यै स्वाहा ।
सततं मन्त्रराजोऽयं दक्षिणे मां सदावतु ॥
ॐ ऐं ह्रीं श्रीं त्र्यक्षरो मन्त्रो नैर्ऋत्यां सर्वदावतु ।
ॐ ऐं जिह्वाग्रवासिन्यै स्वाहा मां वारुणेऽवतु ॥
ॐ सर्वाम्बिकायै स्वाहा वायव्ये मां सदावतु ।
ॐ ऐं श्रीं क्लीं गद्यवासिन्यै स्वाहा मामुत्तरेऽवतु ॥
ॐ ऐं सर्वशास्त्रवासिन्यै स्वाहैशान्यां सदावतु ।
ॐ ह्रीं सर्वपूजितायै स्वाहा चोर्ध्वं सदावतु ॥
ॐ ह्रीं पुस्तकवासिन्यै स्वाहाऽधो मां सदावतु ।
ॐ ग्रन्थबीजस्वरूपायै स्वाहा मां सर्वतोऽवतु ॥
इति ते कथितं विप्र ब्रह्ममन्त्रौघविग्रहम् ।
इदं विश्वजयं नाम कवचं ब्रह्मरूपकम् ॥
पुरा श्रुतं धर्मवक्त्रात्पर्वते गन्धमादने ।
तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्य चित् ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः ।
प्रणम्य दण्डवद् भूमौ कवचं धारयेत्सुधीः ॥
पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत् ।
यदि स्यात्सिद्धकवचो बृहस्पतिसमो भवेत् ॥
महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत् ॥
शक्नोति सर्वं जेतुं च कवचस्य प्रसादतः ॥
इदं च कण्वशाखोक्तं कवचं कथितं मुने ।
स्तोत्रपूजाविधानं च ध्यानं च वन्दनं तथा ॥

इति श्री १०८ जगदम्बिकायाः सरस्वतीदेव्याः कवचं सम्पूर्णम् ॥

अथ दण्डवत्प्रणम्य नृत्यगीतादिना महोत्सवं कुर्यात् । ब्राह्मणान् भोजयेच्च ॥

एवं गते दिने व्यतीतायां रात्रौ प्रातः स्नात्वा नित्यक्रियाः कृत्वा गणेशं विसर्ज्य कवचं पठित्वा यथाशक्ति नैवेद्यानि दत्त्वा नीराजनं विधाय ॐ ऐं ह्रीं श्रीं सरस्वति पूजिताऽसि क्षमस्व मयि रमस्वेति सम्प्रार्थ्य दक्षिणां दद्यात् यथा—

ॐ अद्य कृतैतन्माघशुक्लपञ्चमीतिथ्यधिकरणकगणेशपूजनपूर्वक-श्रीसरस्वतीपूजनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूलकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे। इति दक्षिणान्दत्त्वा निर्माल्यान्यम्भसि क्षिपेदिति सरस्वतीपूजनविधिः॥

अथ तन्त्रसारोक्तमन्त्रविचारः।

| | |
|---|---|
| श्री १०८ दुर्गाया बीजम् | ह्रीं दुं दुर्गायै नमः॥ |
| वागीश्वर्याः | वद वद वाग्वादिनि स्वाहा॥ |
| गणेशस्य | गं |
| लक्ष्म्याः | श्रीं |
| महालक्ष्म्याः | ऐं ह्रीं श्रीं क्लीं ह्सौ जगत्प्रसूत्यै नमः। |
| सूर्यस्य | घृणिः सूर्य आदित्यः॥ |
| रामस्य | १ रां रामाय नमः। <br> २ जानकीवल्लभाय हुं स्वाहा |
| विष्णोः | नमो नारायणाय॥ |
| कृष्णस्य | गोपीजनवल्लभाय स्वाहा॥ |
| नृसिंहस्य | उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतो मुखम्। <br> नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यम्॥ |
| शिवस्य | हौं॥ |
| मृत्युञ्जयस्य | जूंसः॥ |
| महामृत्युञ्जयस्य | हौं ॐ जूंसः ॐ भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्, उर्व्वारुकमिव बन्धनान्, मृत्योर्मुक्षीयमामृतात्। हौं ॐ जूंसः ॐ भूर्भुवः स्वः |
| क्षेत्रपालस्य | क्षं क्षेत्रपालायनमः |
| श्रीविद्यायाः | १ क एइल ह्रीं। <br> २ हस कलह ह्रीं॥ <br> ३ सकल ह्रीं॥ |
| हनूमतः | हं हनूमते रुद्रात्मकाय हुं फट्स्वाहा॥ |
| त्र्यम्बकस्य | त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। <br> उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। <br> हौं जूंसः ॐ भूर्भुवः स्वः॥ |



| | |
|---|---|
| शनैश्चरस्य | ऐं ह्रीं श्रीं शनैश्चराय॥ |
| बगलामुख्याः | ह्रीं बगलामुखि सर्वदुष्टानां वाचं मुखं स्तभय जिह्वा कीलय कीलय बुद्धिं नाशय ह्रीं ॐ स्वाहा॥ |
| सरस्वत्याः | ऐं॥ |

अथ सुखप्रसव-मन्त्रः।

मन्मथ मन्मथ वाहि वाहि लम्बोदर मुञ्च मुञ्च स्वाहा॥ १॥

अथवा—

मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्येण रश्मयः।
मुक्तः सर्वभयाद् गर्भ एह्येहि मारीच स्वाहा॥ २॥

अनयोरन्यतरेणाष्टवारं जलमभिमन्त्र्य देयं, पीत्वा च नारी सुखप्रसवा भवतीति॥ किंच—

ॐ अस्ति गोदावरीतीरे जृम्भला नाम राक्षसी।
तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत्॥

इति मन्त्रं पठन् गृहद्वारि तिष्ठन् वशं स्पृशेत्॥

अथ महाविद्याया नामानि।

मुण्डमालातन्त्रे—

काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा॥
बगला सिद्धविद्या च मातङ्गी कमलात्मिका।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः॥

अरुणोदयः ब्रह्मवैवर्त्ते—

सूर्योदयात् पूर्वं [1]मुहूर्त्तद्वयकालः। यथा—

चतस्रो घटिकाः [2]प्रातररुणोदय उच्यते।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः॥

अथ दीक्षाविचारः—

दीक्षा गुरुमुखात् स्वेष्टदेवमन्त्रग्रहणमिति [3]लक्षणं च यथा संग्रहे—

---

१. घटिकाद्वयं मुहूर्त्त इति। २. घटिका-दण्डः॥ ३. मन्त्रशब्दार्थश्च—
मननं विश्वविज्ञानं त्राणं संसारबन्धनात्।
यतः करोति संसिद्धय मन्त्र इत्युच्यते ततः॥
अन्यच्च—मननात्त्रायते यस्मात्तस्मान्मन्त्रः प्रकीर्त्तितः॥ इति॥

दीयते ज्ञानमत्यन्तं क्षीयते पापसञ्चयः ।
तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तत्त्ववेदिभिः ॥
दिव्यं ज्ञानं यतो दद्यात्कुर्यात्पापस्य संक्षयम् ।
तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः ॥

दीक्षाया आवश्यकत्वमाह—यथा सङ्ग्रहे—पार्वतीं प्रतीश्वरवाक्यम्—

दीक्षामूलं जपं सर्वं दीक्षामूलं परन्तपः ।
दीक्षामाश्रित्य निवसेद् यत्र कुत्राश्रमे वसन् ॥
अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः ।
न भवन्ति प्रिये तेषां शिलायामुप्तबीजवत् ॥
देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥

अन्यच्च—अदीक्षितश्च मरणे रौरवं नरकं व्रजेत् ।
तस्माद्दीक्षां प्रयत्नेन सदा कुर्याच्च तान्त्रिकात् ॥
नादीक्षितस्य कार्यं स्यात्तपोभिर्नियमव्रतैरिति ।

मत्स्यसूक्ते-अदीक्षितानां मर्त्यानां दोषं शृणु वरानने ॥
अन्नं विष्ठासमं तस्य जलं मूत्रसमं स्मृतम् ।
तत्कृतं तस्य वा श्राद्धं सर्वं याति ह्यधोगतिम् ॥

गोविन्दः—अदीक्षितस्य मरणे प्रेतत्वं नैव मुञ्चति ।
अतः सद्गुरोराहितदीक्षः सर्वकर्माणि [1]कुर्यात् ॥

अतो दीक्षाकरणं सर्वथा न्याय्यं तत्र चेयं व्यवस्था पुरुषो मातुः, स्त्री श्वश्र्वाः, दीक्षां गृह्णीत चेत्तत्र नैव विवाद इति शिष्टमैथिलाचारतत्त्ववित्तीर्थचरणाः ॥

यत्तु—स्मृत्यनुक्तत्वाद्दीक्षाकरणस्यान्याय्यत्वं तत्र स्मृत्यविरोधित्वेन तन्त्रशास्त्रोक्तत्वेन च शिष्टाचारपरिगृहीतत्वादिति स्मृतितत्त्वविदः ॥ इति ।

---

१. साधयेदिति पाठः समीचीनः ॥



अथ पञ्चपल्लवमाह—शब्दचन्द्रिकायाम्—

आम्र[1] जम्बू[2] कपित्थानां[3] बीजपूरक[4] बिल्वयोः[5] ।
गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ।

अथ वैदिककर्मणि घटोपरि देयपञ्चपल्लवं यथा—

आम्राऽश्वत्थ[6] वट[7] पर्कटी[8] यज्ञोदुम्बराणि[9] ॥ तान्त्रिककर्मणि पञ्चपल्लवं यथा—तन्त्रसारे—

पनसाम्रं[10] तथाश्वत्थं वटं वकुलमेव[11] च ।
पञ्चपल्लवमुक्तं च मुनिभिस्तन्त्रवेदिभिः ॥

पञ्चरत्नम्—

[12]कनकं [13]हीरकं [14]नीलमणिः [15]पद्मरागः [16]मुक्तेति ॥ तथाह हेमाद्रिः—

कनकं हीरकं नीलं पद्मरागं च मौक्तिकम् ।
पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्वदर्शिभिरिति ॥

तत्र चायं विशेषः—

रत्नानां चाप्यभावे तु स्वर्ण[17] कर्षार्धमेव वा ।
सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैरिति ।

कनक-रजत-प्रवाल-मुक्ता-ताम्रमिति आधुनिकव्यवहारज्ञाः ।

सप्तधान्यम् भविष्ये—

यवगोधूमधान्यानि तिलाः कङ्गु[18] स्तथैव च

---

१. आम्रश्चूतवृक्षः—आम इति भाषा ॥ २. जम्बूफलवृक्षः गोलावजाम गुलजामु इति भाषा ॥ ३. कपित्थः कथ इति भाषा ॥ ४. बीजपूरकः—फलपूर इत्यमरः—टाभनेबो इति भाषा ॥ ५. बिल्वः प्रसिद्धवृक्षः—बेल इति भाषा ॥ ६. अश्वत्थः-वृक्षविशेषः-पीपर इति भाषा ॥ ७. वटः—न्यग्रोधः बड़ इति भाषा ॥ ८. पर्कटी-प्लक्षवृक्षः-पाकड़ इति भाषा ॥ ९. यज्ञोडुम्बरः–उदुम्बरः–दुम्बर इति भाषा ॥ १०. पनसः कंटकी वृक्षः–कटहर–कटहल इति भाषा ॥ ११. वकुलः स्वनामख्यातपुष्पवृक्षः ॥ १२. कनकं सुवर्णम् ॥ १३. हीरकं रत्नविशेषः–हीरा इति भाषा ॥ १४. नीलमणिः स्वनामख्यातमणिः ॥ १५. पद्मरागः रक्तमणिः । १६. मुक्ता मोती इति भाषा ॥ १७. कर्षः षोडशमाषपरिमाणमिति, अशीतिरक्तिका इत्यमरः ॥ दशमाषक इति राजनिघंटुः । माषश्च पञ्चगुञ्जात्मकः ॥ १८. कङ्गु कानु इति भाषा ।

श्या[1] माकाश्चणका[2] श्चैव सप्तधान्यमुदाहृतम् ॥

पञ्चगव्यमाह—

गोमय-गोमूत्र-दुग्ध-दधि-घृतरूपकम्। तत्परिमाणं यथाचारादर्शे—

गोशकृद्द्विगुणं मूत्रं पयः स्याच्चतुर्गुणम्।
घृतं तद्द्विगुणं प्रोक्तं पञ्चगव्ये तथा दधि ॥

बहिर्जानु भोजनादिनिषेधमाह बौधायनः—

भोजन हवनं दानमुपहारः[3] प्रतिग्रहः।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥

गण्डूषदेशः पारिजाते—

पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा।
ऋषयः पृष्ठतः सर्वे वामे गण्डूषमुत्सृजेत् ॥

उत्कृष्टोपवीतमाह कात्यायनः—

पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम्।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥

वशिष्ठः—नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥

अथ नवानां ग्रहाणां दानवस्तूनि निर्णीयन्ते—

सूर्ये धेनुश्च ताम्रं च गोधूमं रक्तचन्दनम्।
चन्द्रे चन्दनशङ्खौ च वस्त्रं च तिलतण्डुलान् ॥
कुजे वृषः प्रदातव्यो रक्तवस्त्रं गुडौदनम्।
बुधे कर्पूरमुद्गं च हरिद्रस्त्रं हिरण्यकम् ॥
पीतवस्त्रद्वयं जीवे हरिद्रा कनकानि च।
अश्वः शुक्रे सितो देयः शुक्लधान्यानि यानि च ॥
शनौ च सतिला देया कृष्णा गौर्लौहमुत्तमम्।
राहौ च महिषीच्छागौ माषाश्च तिलसर्षपाः ॥

---

१. तृणधान्यविशेषः श्याम इति भाषा। २. चना इति भाषा।
३. उपहारः पारितोषिकद्रव्यमित्यमरः।



अजामेषौ च दातव्यौ केतौ चान्नं च मिश्रितम्।
स्वर्णगोपूजाभिरिह सर्वेषां शान्तिरुत्तमा ॥

इति श्रोत्रियवंशोद्भवश्रीरमाकान्तठक्कुरेण संगृहीते पौरोहित्यकर्मसारे मांगलिककर्मविधिवर्णनं नाम द्वितीयः परिच्छेदः समाप्तः।

## अथ तर्पणविचारः—

तर्पणं प्रीणनम्। पितॄणां–देवानाम्–ऋषीणां च विधिना जलान्नदानेन तृप्तिसंपादनमिति यावत् ॥

तर्पणाकरणे दोषो यथा—

(स चाधिकारिविषये एव)

नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः।
पिबन्ति रुधिरस्रावं पितरो वै जलार्थिनः ॥

अस्य विधानं यथा—

स्नातश्चार्द्रवासा देवर्षिपितृतर्पणं जलस्थ एव कुर्यात् ॥ परिवर्त्तितवासाश्चेत् जलादुत्तीर्य स्थलस्थ एवेति भावः ॥ तत्र देवतर्पणं प्राङ्मुखेनोप[1]वीतिना देवतीर्थेन कार्यम्। मनुष्यतर्पणं च निवीतिना [2]मनुष्यतीर्थेन 'सामगेन प्रत्यङ्मुखेन' अन्यवेदिनोदङ्मुखेन कार्यम्। ततः पितृतर्पणं दक्षिणमुखेन प्राचीना[3]वीतिना पितृतीर्थेन कार्यम् ॥

---

१. उपवीतं दक्षिणकरे बहिष्कृते सति वामस्कन्धार्पितं यत् कटिं विन्दते यज्ञसूत्रं तदिति ॥ तद्विशिष्टश्चोपवीतीति तीर्थानुसारिणः ॥

२. निवीतं कंठलंबितयज्ञसूत्रं यथा–उपवीतं भवेन्नित्यं निवीतं कंठसज्जनमिति कूर्मपुराणे तद्विशिष्टो निवीती, यथाऽह्निकतत्त्वे–'कृतोपवीतो देवेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथेति ॥ यद्यप्यनेन ऋषितर्पणं निवीतिना कार्यमित्यायाति परन्त्वाचारादुपवीतिनेत्युक्तं मूलेऽत्र चाचारोऽनुसंधेयः।

३. प्राचीनावीतं वामकरे बहिष्कृते सति दक्षिणस्कन्धार्पितयज्ञसूत्रमित्यमरः। तथा हि कूर्मपुराणे—

सव्यं बाहुं समुद्धृत्य दक्षिणे तु धृतं द्विजाः।
प्राचीनावीतमित्युक्तं पित्र्ये कर्मणि योजयेदिति ॥

अथ जलतर्पणपक्षे तत्परिमाणमाह—

[1]नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः ।
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोञ्जलिमिति ॥

अथ प्रसङ्गवशादत्र विचार्यते—

नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते ॥ १ ॥
तस्माज्जले जलं देयं पितॄणां दत्तमक्षयम् ॥ २ ॥

इति शंख-कार्ष्णाजिनिवचनाभ्यामेकवाक्यताभ्यामधिकफलार्थिना जलस्थेन सामगेन जलेऽतदर्थिना स्थलस्थेन स्थले तर्पणं कर्त्तव्यमित्याचारसंग्रहः ॥

अथ—भूमौ यदापो दीयन्ते दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयन्नोपतिष्ठति कस्य चित् ॥

एतेन यमवचनेन जलस्थो जले एव स्थलस्थो स्थले एव तर्पणं कुर्यादिति निर्णयः ॥

जलसमीपस्थेन तर्पणजलं जले एव प्रक्षेप्तव्यम् । यदा चोद्धृतजलेन तर्पणं तदेव स्थले तर्पणजलप्रक्षेप इति ॥

शङ्खस्तु—उदके नोदकं कुर्यात् पितृभ्यश्च कदाचन ।
उत्तीर्य च शुचौ देशे कुर्यादुदकतर्पणम् ॥ इति ।

जलस्थतर्पणं निवार्य शुचौ देशे तर्पणं विधाय 'नोदकेष्विति' जलसमीपस्थस्यापि जले तर्पणजलप्रक्षेपनिषेधमाह ॥ एवं चैतन्मते स्थलस्थेन सर्वत्र जलं स्थले एव प्रक्षेप्तव्यमित्यायाति ॥

आकाशे प्रक्षिपेद्वारि जलस्थो दक्षिणामुखः ॥

आकाशे जलोपर्य्येवेति सुमन्तुः ॥ एवं च जलस्थेन जल एव स्थल-

---

तद्विशिष्टः प्राचीनावीती ॥ यथाह्निकतत्त्वे—
सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणे अंसे प्रतिष्ठापयति यज्ञसूत्रं सव्यकक्षमवलम्बं भवति, एवं भवति प्राचीनावीतीति ॥

1. व्यवस्थासारे—
नाभेरूर्ध्वं हरेदायुरधो नाभेस्तपःक्षयः ।
नाभेः समजलं कृत्वा स्नानतर्पणमाचरेदिति ॥



स्थलस्थेन स्थले एव तर्पणजलं प्रक्षेप्तव्यमित्याचारादर्शः ॥ तत्रापि कुशोपर्य्येवेति परन्त्वत्र देशाचारोनुसन्धेय इति तीर्थप्रभृतयः ॥

प्रमाणं च—प्रागग्रेषु सुरांस्तर्प्येद् मनुष्यांश्चैव मध्यतः ।
पितृंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन् ॥

इत्याग्नेयपुराणम् ॥

पितृकर्मणि छन्दोगपरिशिष्टे विशेषमाह—

दक्षिणं पातयेज्जानु देवान् परिचरन्सदा ।
पातयेदितरज्जानु पितॄन्परिचरन्नपि ॥ इति ॥

अथ तिलतर्पणनिषेधो यथा मरीचिः—

सप्तम्यां भानुवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ १ ॥

अत्र भृत्यादिपददर्शनान्निष्कामस्य न निषेधः ॥

स्मृतिकाराः—

रवौ शुक्रदिने चैव द्वादश्यां श्राद्धवासरे ।
सप्तम्यां जन्मदिवसे न कुर्यात्तिलतर्पणम् ॥ २ ॥

मत्स्यपुराणे—

संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा ।
श्राद्धे जन्मदिने चैव न कुर्यात्तिलतर्पणम् ॥ ३ ॥

प्रतिप्रसवमाह मरीचिः—

तीर्थे तिथिविशेषे च गंगायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥

वस्त्रनिष्पीडनदेशः—

जलमध्ये तु यः कश्चिद् द्विजातिर्ज्ञानदुर्बलः ।
निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥ १ ॥
वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले ॥ २ ॥

इति पराशर-योगियाज्ञवल्क्यवचनाभ्यां स्थले एव वस्त्रनिष्पीडनं सिद्धम् । तदपि सव्येतरेणैवेति ॥

अथ प्राजापत्यादितीर्थः प्रथमभागे उक्तत्वान्नेहोपन्यस्यते । तथाप्यत्र दैवादितीर्थप्रदर्शनान्तर्गततया सोऽपि प्रदर्श्यते—

| | | |
|---|---|---|
| कनिष्ठामूलम् | हारीतमतेन | प्राजापत्यम् । |
| | शङ्खमतेन | कायं—ब्राह्ममित्यर्थः । |
| | बौधायनमतेन | दैवम् । |
| हस्तमध्यम् | हारीतवशिष्ठयोर्मतेन | आग्नेयम् । |
| | यो० याज्ञवल्क्यमतेन | सौम्यम् । |

तर्जन्यंगुष्ठमूलमध्यं सर्वेषां मतेन पैत्र्यम् तीर्थमित्याहुर्मुनयः ॥

इति तर्पणविचारः ॥

अथ प्रेतपिण्डदानक्रमः ।

रात्रौ दाहश्चेत्तर्हि न रात्रौ पिण्डदानं भवति किं त्वग्रिमदिने पिण्डद्वयं देयम् । तत्रायं क्रमः—प्रथमेऽह्नि प्रथमभागोक्तबन्धुजनश्रावितसन्तोषवाक्यैर्वारित[1]शोकः । जलाशये दातव्यपिण्डस्थानादैशान्यां दिशमग्निं प्रज्वाल्य तदग्नौ प्रसृतिद्वयपरिमितं तण्डुलं स्वयं पचेत् । ततो मृत्तिकया दक्षिणप्लवां पिण्डिकां निर्माय दीपं प्रज्वाल्य कृतापसव्यो दक्षिणाभिमुखः पातितवामजानुः पिण्डिकोपरि दक्षिणाग्रान्कुशानास्तीर्य जलतिलपुष्पचन्दनयुतं पिप्पलपत्रनिर्मितं पुटकं वामहस्तेनादाय दक्षिणहस्तेन मोटकतिलजलान्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेत अत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामित्युत्सृज्य पिण्डिकास्थकुशोपरि दद्यात् । ततस्तिलघृतयुक्तं मधुसिक्तं तप्तमेव पिण्डमादाय मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत एष शिरःपूरकः प्रथमः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति तर्जन्यंगुष्ठमूलमध्येन पितृतीर्थेन पिण्डिकास्थकुशोपरि दद्यात् । ततोऽवनेजनावशिष्टजलेन (छन्दोगस्त्वपरस्मिन् पुटके जलतिलगन्धपुष्पाणि दत्त्वा न त्ववनेजनावशिष्टेनेति विशेषः)

१. वारितशोक इत्यस्यायं भावः श्राद्धपर्यन्तं बान्धवैर्न रोदनीयं प्रथमभागोक्तातिदोषश्रवणात् । अतएव सपिण्डीकरणान्तां क्रियां समाप्य गृहमागते श्राद्धकर्त्तरि द्वादशाहे रुद्यते स्त्रीभिरिति शिष्टाचारः ॥



प्रत्यवनेजनदानं यथा-मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत अत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति प्रत्यवनेजनजलं पिण्डोपरि दद्यात् । ततस्तूष्णीमेव गन्धपुष्पधूपदीपान् दद्यात् ॥ ततः फलमूलोपकरणैः तन्तु[1]मयवस्त्रशीतलजलादिभिः पिण्डमर्चयेत् । ततः क्षणं पिण्डाभिमुखस्तिष्ठेत् ततो मोटकादीन्यादाय ॐअद्यामुकगोत्र पितरमुकप्रेत एष तिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठतामित्येकं तिलतोयाञ्जलिं पिण्डसमीपे दद्यात् । तथैकस्मिन् पुटके जलतिलं कृत्वा ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं तिलतोयपात्रं ते मया दीयते तवोपतिष्ठतामित्युत्सृज्य पिण्डसमीपे तिलतोयपात्रं दद्यात् । छन्दोगानां त्ववनेजन-पिण्डदान-प्रत्यवनेजनेषु जलस्पर्शः । ततः सर्वं जले क्षिपेत् । प्रेतपिण्डेषु द्वितीयादिष्वयमेव क्रमः[2] ।

अथ द्वितीयादिदशमान्तपिण्डदानवाक्यानि यथा—

२—ॐ [3]अद्यामुकगोत्र पितरमुकप्रेत कर्णाक्षिनासापूरक एष द्वितीयः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ॥

१. न च वस्त्रस्य तन्तुमयत्वात्तं विनाऽनिष्पत्त्या तन्तुमयेतिविशेषणं किमर्थमिति वाच्यम्—ऊर्णा तन्तुमयेतिबोधनार्थत्वादिति तीर्थङ्कराः ।

२. अयमत्र विशेषः—द्वितीयदिने—द्वौ तिलतोयाञ्जली, द्वे तिलतोयपात्रे भवतः । तृतीयदिने—त्रयस्तिलतोयाञ्जलयः, त्रीणि तिलतोयपात्राणि । चतुर्थदिने-चत्वारस्तिलतोयाञ्जलयः, चत्वारि तिलतोयपात्राणि । पञ्चमदिने-पञ्च तिलतोयाञ्जलयः पञ्च तिलतोयपात्राणि । षष्ठदिने—षट् तिलतोयाञ्जलयः, षट् तिलतोयपात्राणि । सप्तमदिने-सप्त तिलतोयाञ्जलयः सप्त तिलतोयपात्राणि । अष्टमदिने—अष्टौ तिलतोयाञ्जलयः, अष्टौ तिलतोयपात्राणि । नवमदिने—नव तिलतोयाञ्जलयः नव तिलतोयपात्राणि । दशमदिने—दश तिलतोयाञ्जलयः, दश तिलतोयपात्राणि भवन्ति ॥ तद्दाने वाक्यं यथा—

ॐ अद्यामुकगोत्र पितरमुकप्रेत एतौ द्वौ तिलतोयाञ्जली ते मया दीयेते तवोपतिष्ठेताम् । एवम् एते त्रयस्तिलतोयाञ्जलयस्ते मया दीयन्ते तवोपतिष्ठन्तामित्यादि ॥ एवम्—एते द्वे तिलतोयपात्रे, एतानि तिलतोयपात्राणि ॥ एवमेव सर्वस्मिन् दिने संख्यावृद्ध्या वाक्यं दद्यात् ।

३. त्र्यहाशौचे ब्राह्मणेन प्रथमदिने त्रयः पिण्डा देयाः, द्वितीयदिने चत्वारः, तृतीयदिने त्रयो देयाः । अथवा प्रथमदिने एकः, द्वितीयदिने पञ्च देयाः । सद्यः शौचे तु स्नानान्तरमेवैकाहेन दशपिण्डा देया इत्यलं बहुना ॥

३—ॐअद्यामुकगोत्र पितरमुकप्रेत गलांसभुजवक्षःपूरक एष तृतीयः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ॥

४—ॐअद्यामुकगोत्र पितरमुकप्रेत नाभिलिङ्गगुदपूरक एष चतुर्थः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ॥

५—ॐअद्यामुकगोत्र पितरमुकप्रेत जानुजङ्घापादपूरक एष पञ्चमः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ॥

६—ॐअद्यामुकगोत्र पितरमुकप्रेत सर्वमर्मपूरक एष षष्ठः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ।

७—ॐअद्यामुकगोत्र पितरमुकप्रेत सर्वनाडीपूरक एष सप्तमः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ॥

८—ॐअद्यामुकगोत्र पितरमुकप्रेत दन्तलोमादिपूरक एषोऽष्टमः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति ॥

९—ॐअद्यामुकगोत्र पितरमुकप्रेत सर्ववीर्यपूरक एष नवमः पिण्डस्ते मया दीयते तवोपतिष्ठताम् ॥

१०—ॐअद्यामुकगोत्र पितरमुकप्रेत पूर्णत्वतृप्तताक्षुद्विपर्ययपूरक एष दशमः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति प्रेतपिण्डदानक्रमः ॥

जीवत्पितृकेण वर्ज्यम्—

तर्जन्यां रूप्यधारणं न कार्यम् । सग्रन्थिपरिमण्डलं वस्त्रं द्व्यंगुलादिविस्तृतं सूत्रकृतं परिमण्डलरूपं वा—उत्तरीयं न धार्यम् । तथोत्तरीयस्थानापन्नं स्मृत्युक्तं तृतीययज्ञोपवीतं न धार्यम् । परं तु प्रावरणरूपं द्वितीयवस्त्रं जीवत्पितृकादिभिः सर्वैर्धार्यम् 'एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनमि'त्यादिना सर्वकर्मस्वेकवस्त्रत्वनिषेधादिति काशीनाथोपाध्यायः॥

तथा भाद्रकृष्णामायां कुशोत्पाटनमपि जीवत्पितृकेण न कार्यमिति शिष्टमैथिलाचारतत्त्वविदः । एवमेव तीर्थानुसारिणो मन्यन्ते । अयमेव व्यवहारः प्रचलितो मिथिलायामिति ॥

**इति व्याकरणतीर्थोपाधिविभूषितेन लोहनाग्रामनिवासिना पंडित श्रीरमाकान्तशर्मणा संगृहीते पौरोहित्यकर्मसारस्य द्वितीयभागेऽमाङ्गलिकविधिवर्णनं नाम तृतीयः परिच्छेदः सम्पूर्णः ॥**

## अथ प्रकीर्णविधिः

अथ स्त्रीणां चुल्लिकोपरि नूतनमृद्भाण्डस्थापनस्नानदिवसमाह—
ज्योतिःसारे—

चुल्लिकोपरि मृद्भाण्डं स्थापयेन्नैव कामिनी ।
भृगुचन्द्रमसोर्वारे स्नायान्नैव च वारुणे ॥ १ ॥

वारुणे शतभिषायाम् ।

गर्गसंहितायाम्—

स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषाङ्कते ।
सप्तजन्म भवेयुस्ता विधवा दुर्भगा ध्रुवमिति ॥

अथ मेधिस्थापनप्रकारः—

वटोदुम्बरनीपानां[1] शाखोट[2]बदरस्य च ।
शाल्मलेर्मुशलेनैव मेधिं कुर्याद्विचक्षणः ॥ १ ॥
कपित्थबिल्ववंशानां न च मेधिः कदाचन ।
न च पौषे न रिक्तायां न कुजार्किदिने[3] तथा ॥ २ ॥
मृदुक्षिप्रचरर्क्षेषु[4] खाते द्रव्यं नियुज्य च ।
संपूज्य धान्यबद्धाग्रां मेधिं संस्थापयेद् बुधः ॥ ३ ॥

प्राग्दीक्षाकरणस्यावश्यकतामुक्त्वाऽधुना तदीयदिवसविचारे मासमाह—

मन्त्रस्वीकरणं चैत्रे बहुदुःखफलप्रदम् ।
वैशाखे रत्नलाभश्च ज्येष्ठे च मरणं ध्रुवम् ॥ १ ॥
आषाढे बन्धुनाशः स्याच्छ्रावणे तु सुखावहः ।
प्रजाहानिर्भाद्रपदे सर्वत्र सुखमाश्विने ॥ २ ॥
कार्त्तिके धनवृद्धिः स्यान्मार्गशीर्षे शुभप्रदम् ।
पौषे तु ज्ञानहानिः स्यान्माघे मेधाविवर्धनम् ॥ ३ ॥
फाल्गुने सुखसौभाग्यं सर्वत्र परिकीर्त्तितम् ।
दीक्षाकर्मफलं मासेष्वित्येवं च शुभाशुभम् इति ॥

अथ त्रिपुण्ड्रधारणप्रकारः लिङ्गपुराणे यथा—

---

१. नीपः कदम्बः ।　　२. शाखोटः शाहोड इति प्रसिद्धः ।
३. आर्किः शनिः ।　　४. मृद्वादिव्याख्या प्रथमभागनवान्नभक्षणदिवसविचारे द्रष्टव्या ॥

[1]ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्। इति मन्त्रेण ब्रह्मचारिणा, ॐ नमः शिवायेति तन्त्रेण गृहस्थैः वनवासिभिश्च ब्राह्मणादि-त्रिभिर्वर्णैः, ओमित्यनेन संन्यासिभिः, नमः शिवायेति मन्त्रेण शूद्रैः, त्रिपुण्ड्रं धार्यम् ॥

वर्णभेदेन त्रिपुण्ड्रधारणभेदो यथा—

विप्रे त्रिपुण्ड्रमुद्दिष्टं चतुरस्रं तु पार्थिवे[2]।
वैश्ये त्र्यस्रं तु तत्पुण्ड्रं शूद्रे वृत्तं प्रकीर्त्तितम् ॥

वचनानि यथा—

त्र्यायुषेति च मन्त्रेण त्रिपुण्ड्रं ब्रह्मचारिणा।
पञ्चाक्षरेण मन्त्रेण प्रणवेनान्वितेन च ॥ १ ॥
त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थश्च वनाश्रमी।
नमोन्तेन शिवेनैव धार्यं शूद्रैः स्त्रीभिः सदा ॥ २ ॥
अन्येषामपि सर्वेषां विना मन्त्रेण सुव्रत ॥ ३ ॥ इति ॥

पार्थिवशिवलिङ्गपूजने अस्यावश्यकतामाह स्कान्दे—

विनारुद्राक्षभस्मभ्यां पूजयेद्यः सदाशिवम्।
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ॥

वर्ज्यान्याह स्मृतिमयूखे—

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

बिल्वपत्राणामावश्यकतामाह-आदित्यपुराणे—

बिल्वपत्रैर्विना पूजां यः करोति शिवस्य च।
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ॥

निषेधमाह—लैङ्गे—

शूद्रानीतैः क्रयक्रीतैर्बिल्वपत्रैर्ममार्चनम्।
यः करोति स मूढात्मा रौरवं नरकं व्रजेत् ॥

१. जमदग्नेर्महर्षेः-कश्यपस्य-अगस्त्यस्य देवानामिन्द्रादीनां यत् त्र्यायुषं त्रीणि आयूंषि ( बाल्ययुवस्थविरत्वानि ) तत् त्र्यायुषं, हे रुद्र ! प्रीतिकारकभस्म मे अस्तु भवत्वित्यर्थः ॥

२. पार्थिवे क्षत्रिये ॥



तत्र दिवसविचारः—

पूजारम्भो रवौ शुक्रे बुधे जीवे विशेषतः।
शनौ मृत्युः क्षयो भौमे सोमे सिद्धिमवाप्नुयात् ॥

तत्र मासाः—पूजारम्भस्तु चैत्रे च बहुशोकप्रदः स्मृतः।
वैशाखे वांछितार्थः स्याज्ज्येष्ठे मरणमेव च ॥
आषाढे क्लेशमाप्नोति श्रावणे वुद्धिवर्द्धनम्।
प्रजानाशो भाद्रपदे महासिद्धिस्ततः परः ॥
कार्त्तिके ज्ञानसिद्धिः स्यान्मार्गशीर्षे सुखं भवेत्।
पौषे हानिश्च विज्ञेया माघे सिद्धिस्ततः परे।
फाल्गुने सर्वसिद्धिस्तु जायते सर्वकर्मसु ॥

अथ प्रशस्तास्तिथयः—

द्वितीया—तृतीया—चतुर्थी—पञ्चमी—सप्तमी—अष्टमी—नवमी—दशमी—एकादशी—द्वादशी—त्रयोदशी—चतुर्दशीति ॥

अथ प्रशस्तनक्षत्राणि—

अश्विनी—रोहिणी—मृगशिरा—आर्द्रा—पूर्वा—हस्त—अनुराधा—ज्येष्ठा—रेवतीति ॥

आवश्यकतायां तु—

भरणी—कृत्तिका—पुनर्वसु—पुष्य—आश्लेषा—मघा—चित्रा—स्वाती—मूला—न्येतानि नक्षत्राणि विहाय सर्वस्मिन् पूजा कार्येति तीर्थः ॥[1]

अथ शिववासविचारः—

तिथिञ्च द्विगुणीकृत्य पञ्चभिश्च समन्विताम्।
सप्तभिश्च हरेद्भागं शिववासं विचारयेत् ॥
एकेन वासः कैलासे द्वितीये गौरिसन्निधौ।
तृतीये वृषभारूढं सभायाञ्च चतुर्थके ॥
पञ्चमे भोजने चैव क्रीडायाञ्च रसायने।
श्मशाने सप्तमे चैव शिववासः प्रकीर्त्तितः ॥

१. शिवपूजायां वारमासतिथिनक्षत्राणां प्राशस्त्यमुक्त्वा ग्रन्थविस्तरभिया योगादीनां नोक्तम्। आधुनिकाश्च न विचारयन्ति योगादीनित्यतोऽपि तेष्वाना-दरबुद्धिरिति।

कैलाशे च भवेत्सौख्यं गौर्याञ्च सुखसम्पदः ।
वृषभे ह्यष्टसिद्धिः स्यात्सभा सन्तापकारिणी ॥
भोजने च भवेत्कार्यं क्रीडायां कार्यनाशनम् ।
श्मशाने च भवेन्मृत्युः फलमेवं विचारयेत् ॥
शिववासमविज्ञाय प्रवृत्तः शिवकर्मणि ।
न तत्फलमवाप्नोति अनुष्ठानशतैरपि ॥

तथा चैतन्मते प्रशस्तास्तिथयः—
२–५–६–७–६–१२–१३–१५ ॥ परन्त्वेतासु तिथिषु विहिततिथ्यनुसारेण षष्ठी निषिद्धेति ॥

नववस्त्रपरिधाने दिवसविचारः—ज्यौ० सं०—
[1]मार्त्तण्डे च धनं व्रणश्श [2]शधरे क्लेशस्सदा [3]भूमिजे
वासोलाभकरो बुधे सुरगुरौ [4]विद्यागमः सम्पदः ।
नानायोगरतिः प्रमोदवनिताशय्यादिलाभो [5]भृगौ
दैन्यं शाश्वतरोगवान् किल नरो [6]धृत्वाऽम्बरं [7]सूर्यजे ॥

इति दरभङ्गामण्डलान्तर्गतलोहनाग्रामनिवासिना व्याकरणतीर्थोपाधिसमलङ्कृतेन मिथिलाधौतपरीक्षालब्धप्रतिष्ठेन श्रोत्रियवंशोद्भवश्रीरमाकान्तठक्कुरेण संगृहीते 'पौरोहित्यकर्मसारे' सटिप्पणीको द्वितीयो भागः सम्पूर्णः ।



१. मार्त्तण्डे-रवौ । २. शशधरे चन्द्रे । ३. भूमिजे मङ्गले ।
४. सुरगुरौ जीवे । ५. भृगौ शुक्रे । ६. अम्बरं वस्त्रम् । ७. सूर्यजे शनौ ।
इति पं० श्रीरमाकान्तठक्कुरसंगृहीतपौरोहित्यकर्मसारस्य कृता टिप्पणी सम्पूर्णा ।

M.Katyayana

॥ श्री १०८ कङ्काली विजयतेतराम् ॥

# अथ तृतीयो भागः

अथ सर्वदेवतापूजाधिकारिताप्रयोजकदेवषट्कपूजान्तर्गतपञ्चदेवतापूजाविधिस्तावन्निर्णीयते । देवषट्कपूजावश्यकताप्रयोजकवचनानि तु द्वितीयभाग उक्तत्वान्नेहोपन्यस्यन्ते । तत्र प्रथमं सूर्यपूजा—

रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥ १ ॥

एवं ध्यात्वा पूजयेत् । पुष्पदानमन्त्रस्तु वक्ष्यते । ततो गणपतिपूजा—

खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
विघ्नेशं मधुगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ॥
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ॥ २ ॥

एवं ध्यात्वा पूजयेत् । पुष्पदानमन्त्रस्तु वक्ष्यते । ततोऽग्निपूजा—

पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः ।
छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः ॥ ३ ॥

एवं ध्यात्वा पूजयेत् । पुष्पदानमन्त्रस्तु वक्ष्यते । ततो दुर्गापूजा—

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ॥
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ ४ ॥

एवं ध्यात्वा पूजयेत् । पुष्पदानमन्त्रस्तु वक्ष्यते । ततः शिवपूजा—

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ ५ ॥

एवं ध्यात्वा शिवं पूजयेत्, पुष्पमन्त्रश्च वक्ष्यते । यद्यपि पञ्चानां देवानां पूर्वोक्तनामभिः पृथक् पृथक् पूजा कार्येति पूजापटलतत्त्व-

विदो मैथिलाः। परन्त्वाधुनिकाः केचित् समयसौकर्यात् सममेव पूजामिच्छन्ति ॥ तत्रायं क्रमः—

ॐ सूर्यगणपत्यग्निदुर्गाशिवा इहागच्छत इह तिष्ठतेति मनसा ध्यात्वाऽक्षतादिभिरावाह्य पञ्चोपचारैः सम्पूज्य ।

ॐ सूर्यगणपत्यग्निदुर्गाशिवाः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छतेति विसर्जयेत् !

अथ पञ्चदेवतापूजापुष्पदानमन्त्राः ( सामवेदिनाम् )—

सूर्यस्य—ॐ वण्महाँ असि सूर्य वडादित्यमह असि ।
महस्ते सतो महिमापनिष्ट ममहादेव महाँ असि ॥ १ ॥

गणपतेः—ॐ आतून इन्द्र क्षुमन्यञ्चित्रं ग्राभं ।
संगृभाय महा हस्तीदक्षिणेन ॥ २ ॥

अग्नेः—ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ ३ ॥

दुर्गायाः—ॐ इमं स्तोमर्महते जातवेदसे रथमिव सम्महे ।
मा मनीषया भद्राहीनः प्रमतिरस्य संसद्यग्ने सख्ये मारिषामा वयं तव ॥ ४ ॥

शिवस्य—ॐ आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजंरोदस्योः ।
अग्निं पुरातनयित्नौ रचिताद्धिण्यरूपमवसेकृणुध्वम् ॥

यजुर्वेदिनाम्

ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ।
हिरण्येन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ १ ॥

ॐ गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे, निधीनां त्वा निधिपतिꣳ हवामहे व्वसो मम आह मयानि गर्ब्भधमात्वमयासि गर्ब्भधम् ॥ २ ॥

ॐ अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे देवाँ आसादयादिह ॥ ३ ॥

ॐ अंबे अंबिकेऽम्बालिके न मानयति कश्चन, स सस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ४ ॥

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।

इति पञ्चदेवतापूजाविधिः ॥



अथ शालग्रामपूजाविधिः ।

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारा[1]यणः सरसिजासनसन्निविष्टः ।
केयूरवान्कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

इति विष्णुं ध्यात्वा यथाशक्ति पूजयेत् पञ्चोपचारप्रकारो द्वितीयभागे द्रष्टव्यः ॥

विधिश्च यथा—यथोक्तं विष्णुं ध्यात्वा शङ्खस्थदूर्वाक्षत[2] तुलसीपत्रजलादीन्यादाय—सहस्रशीर्षेत्यादिशोडशर्चस्य पुरुषसूक्तस्य नारायणऋषि-

---

१. नारायणशब्दार्थस्तु—
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥

अस्यार्थः—आपो नारशब्देनोच्यन्ते, ता आपः नरसूनवः नरस्य नराख्यपरमात्मनः सूनवोऽपत्यानि । यद्यस्मात्ता आपः अस्य परमात्मनः पूर्वमयनमाश्रयस्तेन नारायणः स्मृत इति ॥

केचित्तु—कलेर्दशसहस्रान्ते विष्णुस्त्यक्ष्यति मेदिनीम् ।
तदर्द्धं जाह्नवीतोयं तदर्द्धं ग्रामदेवताः ॥

इति वचनात्कलेर्दशसहस्रान्ते पृथिवीतले विष्णुपूजा निष्फलेत्याहुस्तन्न,
यावद्धरण्यां तुलसी प्रपूज्यते गुरुर्नभस्थो दिवि कल्पपादपः ।
यावत्समुद्रे वडवानलश्च वसामि राजंस्तव चक्रखाते ॥

इति प्रायश्चित्ततत्त्वधृतभविष्यपुराणीयगङ्गावाक्यविरोधात् ।
पृथिवी गङ्गया हीना भविष्यत्यन्तिमे कलौ । तदैव विष्णुस्त्यजति मेदिनीं नरपुङ्गव ॥
इति विष्णुपुराणवचनविरोधाच्चेति ।

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
साक्षाद् ब्रह्मस्वरूपां त्वां पश्यामि निजचक्षुषा ॥
देवि त्वद्दर्शनादेव महापातकिनो मम । विनष्टमभवत्पापं जन्मकोटिसमुद्भवम् ॥
त्वत्कर्दमैरतिस्निग्धैः सर्वपापप्रणाशनैः । मया विलिप्यते गात्रं मातर्मे हर पातकम् ॥
गङ्गे देवि जगद्धात्रि पदाभ्यां सलिलं तव । स्पृशामीत्यपराधं मे प्रसन्ना क्षन्तुमर्हसि ॥
ब्रह्मस्वरूपे हे गङ्गे स्नानमाचर्यते मया । त्वदीये निर्मले तोये यथोक्तफलदा भव ॥
इति पञ्चभिर्दर्शनादिस्नानान्तं कर्म कुर्यादिति पुराणविदः ॥

२. विष्ण्वर्चनेऽक्षतपदं तिलपरमिति शिष्टाचारतत्त्वविदः ।
न बिल्वैरर्चयेत्सूर्यं न तुलस्या गणाधिपम् ।
नाक्षतैः पूजयेद्विष्णुं न शिवं शङ्खवारिणा । इति वचनात् ॥

रायाः पञ्चदशानुष्टुभोऽन्त्या त्रिष्टुब्जगद्बीजं पुरुषो देवता विष्णुस्नपने विनियोगः । इति ऋष्यादीन् स्मृत्वा—

[1]ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳसर्वत-स्पृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ पुरुष एवेदꣳसर्वय्यँद्भूतय्यँच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य विश्वाभूतानि त्रिपादस्या-

१. पुरुष ईश्वरः, दशांगुलं नाभेरूर्ध्वंश्च, अति अतिक्रम्य, अतिष्ठत्, अर्थात् हृत्पद्मोपरि विज्ञानरूपः स्थितोऽभवत् ।

किंभूतः सहस्रशीर्षाऽसंख्यातशिराः, सहस्रशब्दस्यासंख्यातवाचकत्वात्, तथा सहस्राक्षः सहस्रपात्, अत्राक्षशब्देन समनस्कानि बुद्धीन्द्रियाणि षट्, पादशब्देन कर्मेन्द्रियाणि पंचोच्यन्ते एतेन त्रैलोक्योदरवर्त्तिनां प्राणिनां यानीन्द्रियाणि तानि सर्वाण्यस्यैव पुरुषस्येति बोध्यते । कथमतिष्ठत् भूमिं सर्वतः स्पृत्वा व्याप्य पार्थिवदेहान् व्याप्येति यावत् । अथेन्द्रियाण्याह मनुः—

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पंचमी ।
पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥
बुद्धीन्द्रियाणि पंचैषां श्रोत्रादीन्यनुपूर्वशः ।
कर्मेन्द्रियाणि पंचैषां पाय्वादीनि प्रचक्षते ॥

एकादशं मनो ज्ञेयमिति ॥ १ ॥

इदं यत्किंचिद्वर्त्तमानकालीनं, यद्भूतमतीतकालीनं, यच्च भाव्यं भविष्यत्-कालीनं, तत्सर्वं पुरुष एव । यदन्नेन अदनीयेन अतिरोहत्यतिशयेन जन्मस्थिति लभते तत्सर्वं पुरुष एव । किंभूतः अमृतत्वस्य मोक्षस्य ईशानः प्रभुः । अयं भावः—कालत्रयगोचरः, ब्रह्मादिस्तम्बपर्यन्तविश्वीभूतः, मोक्षदाता च स एव पुरुष इति ॥ २ ॥

अस्य पुरुषस्य, एतावान्महिमा, यत्सर्वंदेशकालव्यापित्वं संसारापवर्गप्रभुत्वं नाम, अतोऽस्मात् कारणात् पुरुषः ज्यायान् श्रेष्ठः, अस्य पुरुषस्य पाद एकपादः विश्वाभूतानि चराचरात्मकानि सर्वाणि । अस्य त्रिपात् पादत्रयं च ऋग्यजुःसामा-

केचित्—आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा ।
यवाः सिद्धार्थकाश्चैव अर्घोऽष्टाङ्गः प्रकीर्त्तितः ॥

इति विष्णुपूजामधिकृत्य नरसिंहपुराणवचनात् 'नाक्षतैः पूजयेद्विष्णुम्' इत्येतद्वचनमर्घातिरिक्तपरमित्याहुः ।



मृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ततो विष्व-ङ्व्यक्रामत् साशनानशने अभि ॥ ४ ॥ ततो व्विराडजायत व्विराजो अधिपूरुषः सजातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ तस्माद्य-ज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्, पशूँस्ताँश्चक्रे व्वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वा अजायन्त ये के चोभयादतः । गावोह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥ तय्यँज्ञम्बर्हिषि प्रौक्षन् पुरुषञ्जातमग्रतः तेन देवा अयजन्त साध्या

त्मकं सूर्यस्वरूपं दिवि स्वर्गे आकाशे वा, मोक्षद्वारमित्यमृतमित्यस्यार्थं इति ॥ ३ ॥

अस्य चतुष्पादलक्षणस्य पुरुषस्य, योऽसौ त्रिपात्पुरुषो भगवानादित्यः स ऊर्ध्वः उपरिस्थो दिविस्थः, अभ्युदैत् अभ्युदितवान् । अस्य पुरुषस्य, पादो जगद्रूपश्चतुर्थांशो लेशः, इह जगति हिरण्यगर्भतया अभवत्, किंभूते जगति साशनानशने अभि भोक्तरि अभोक्तरि कर्मवत्यकर्मवतीतियावत्, अयं भावः येषां सुकृतदुष्कृतेऽधिकारस्ते भोक्तारो ब्राह्मणादयः येषामनधिकारस्ते अभोक्तारो वृक्षकृमिकीटादयः, ततः पुनस्तदनन्तरं विष्वक् सर्वतो व्यक्रामत् सर्वशरीराणि व्याप्यावस्थामकरोत् ॥ ४ ॥

ततः पुरुषाद्धिरण्यगर्भात्, विराट् ब्रह्मा अजायत अभवत्, विराजो ब्रह्मणः सकाशात्, पूरुषो मनुरप्यजायत, स मनुर्जातः सन् पुरोऽग्रे ( पूर्यन्ते सप्तभिर्धातुभिरिति पुरः, शरीराणि वा ससर्ज ) पश्चात् भूमिमत्यरिच्यत भूमावसक्तोऽभवत् ॥

तस्मात्पूर्वोक्तपुरुषपादात्, यज्ञात् सर्वव्यापकात्, सर्वहुतः सर्वैर्हूयमानात् यज्ञस्वरूपात्, पृषदाज्यं हविः सम्भृतं समुत्पन्नं, तत्पृषदाज्यं कर्तुं ये आरण्या मृगादयः, ये च ग्राम्याश्छागादयस्तान् पशून् वायव्यान् वायुदैवतान् चक्रे अकरोत् ॥ ६ ॥

तस्माद्यज्ञात्सर्वहुतः, ऋचः ऋग्वेदाः, सामानि सामवेदाः, जज्ञिरे जाताः तस्मात् छन्दांसि गायत्रीप्रभृतीनि जज्ञिरे जातानि । तस्मादेव यजुरजायत आसीत् ॥ ७ ॥

तस्मात्पुरुषाद्, अश्वा अजायन्त, न केवलमश्वाः किन्तु ये के च ये केचन उभयादत उभयतोदन्ताः पशवोऽश्वादयस्तेऽप्यजायन्त, तस्माद् गावः जज्ञिरे जाताः, तस्मात् अजाश्छागाः अवयो मेषा जज्ञिरे जाताः, हकारः समुच्चयार्थः ॥

तं पुरुषं, पशुं यज्ञसाधनभूतं, बर्हिषि कुशे संस्थाप्य, देवा प्रजापतयः,

ऋषयश्च ये ॥ ९ ॥ यत्पुरुषँव्व्यदधुः कतिधा व्यकल्पयन्। मुखं किम-स्यासीत्किं बाहू किमूरू पादा उच्येते ॥ १० ॥ ब्राह्मणोऽस्य मुखमासी-द्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रो अजायत ॥११॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखा-दग्निरजायत ॥ १२ ॥ नाभ्या आसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समवर्त्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत वसंतोऽस्यासीदाज्यं ग्रीष्मइध्मः शरद्धविः ॥१४॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि

साध्या गणदेवताः, ये ऋषयो मरीचिप्रभृतयस्ते प्रोक्षन् प्रोक्षितवन्तः, किम्भूतम-गतः सृष्टेः पूर्वं जाते तेन पुरुषेण यज्ञसाधनभूतेन अयजन्त यागं कृतवन्तः ॥९॥

अथेदानीं प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते यत्पुरुषमित्यादिना—ब्रह्मादयो देवा यद्यदा पुरुषं व्यदधुः कालेनोत्पादयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं जल्पितवन्तः। तथा हि—अस्य पुरु-षस्य मुखं किमासीत्, किंबाहू उरू चास्तां किं पादावुच्येते ॥ १० ॥

अथ स्तुतिरूपेणोत्तरं विदधाति–अस्य पुरुषस्य मुखं ब्राह्मण आसीद् बभूव, बाहू राजन्यः क्षत्रियः कृतः, अस्य ऊरू यत्तद्वैश्यः कृतः, पद्भ्यां शूद्रोऽजायत, अन्तिमवाक्यदर्शनादस्य मुखादिभ्यो ब्राह्मणादयो जाता इति ॥ ११ ॥

अस्य पुरुषस्य मनसः सकाशाच्चन्द्रमा जातः चक्षोश्चक्षुषः सूर्यः अजायत जातः, श्रोत्राद्वायुश्च प्राणश्च, अजायत, मुखादग्निरजायत, अस्मिन् सृष्टिक्रमे यद्य-न्यत्र विरोधो भवेत्तर्हि विपरीतोऽर्थः स्तुतिरत्रैवं न दोषः ॥ १२ ॥

नाभ्या नाभितोऽन्तरिक्षमाकाशमासीद्बभूव शीर्ष्णो मस्तकात् द्यौः स्वर्गः समवर्त्तत समभवत्। पद्भ्यां पदद्वयाद् भूमिः समवर्त्तत, श्रोत्रात्कर्णाद्दिशः सम-वर्त्तन्त, तथा तेन प्रकारेण स पूर्वपुरुषः लोकान् देवमनुष्यादिनिखिलस्थावरजङ्ग-मादित्रैलोक्यमकल्पयन् अकल्पयत् सृष्टवान् ॥ १३ ॥

पुरुषेण हविषा हविर्भूतेन ( पशुभूतेन ) देवा ब्रह्मादयः, यद्यज्ञम् अतन्वन् कृतवन्तः, अस्य यज्ञस्य, वसन्तऋतुविशेषः ( वसन्तश्चैत्रवैशाखौ ) आज्यं घृत-मासीत्, ग्रीष्म इध्मः समिद्विशेषः, हविः पुरोडाशादिकं शरदासीत् ॥ १४ ॥

यद्यज्ञं यं यागं तन्वानाः कुर्वाणा देवा ब्रह्मादयः पुरुषं पशुं पशुभूतम्, अव-



प्रथमान्यासन् तेह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

इति पुरुषसूक्तं पठन्नेतानि पाद्यार्घाचमनीयस्नानीयपुनराचम-नीयानि ॐ भगवते श्रीविष्णवे नमः। एवम् इदमनुलेपनम्, एते यवतिलाः ॐ विष्णवे नमः। ततः पुष्पाण्यादाय—

छन्दोगः—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसु ले। इति।

यजुर्वेदी तु—ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि वैष्णवे त्वा।

इति मन्त्रं पठित्वैतानि पुष्पाणि ॐ भगवते श्रीविष्णवे नमः। एवम्, एतानि दूर्वादलानि, एतानि तुलसीपत्राणि, इदं विल्वपत्रम्, एतानि नैवेद्यानि, इदमाचमनीयम् ॐ भगवते श्रीविष्णवे नमः। ततो दण्डवद्भूमौ प्रणमेत्। तन्मन्त्रो यथा—ध्येयं सदा परिभवघ्नमभीष्ट-दोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्। भृत्यार्त्तिहं प्रणतपालभ-वाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ १ ॥

त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं
धर्मिष्ठ आर्यवचसा यदगादरण्यम्।
मायामृगं दयितयेप्सितमन्वधावद्
वन्दे महापुरुष ते चरणारविन्दम् ॥ २ ॥ इति ॥

ततः ॐ नमो नारायणायेत्यष्टाक्षरमन्त्रं दशवारमष्टोत्तरशतं वा जप्त्वा विष्णवे समर्प्य प्रणम्य यथाशक्ति स्तुत्वाऽन्यस्मिन् ताम्रपात्रे पादोदकं तुलसीदलयुक्तं धृत्वा, ॐ भगवन् विष्णो पूजितोसि क्षम

न्नन् हतवन्तः, अस्य यज्ञस्य सप्तसमुद्राः, परिधयः भूमिवेष्टनान्यासन्, त्रिः सप्त एकविंशतिः समिधः कृताः। अयं भावः सप्तच्छन्दांसि, सप्तउपच्छन्दांसि, सप्तव्या-हृतयश्चैतानि समिधः कृता इति ॥ १५ ॥

देवा इन्द्रादयः, यज्ञेन यज्ञसाधनभूतेन पश्वादिरूपेण यज्ञं पुरुषं पुरु-षोत्तमम्, अयजन्त पूजितवन्तः, तानि धर्माणि प्रथमान्यासन्, अतएव ते देवा एवं रूपेण यज्ञेनेष्ट्वा नाकं स्वर्गं सचन्त संगताः, यत्र स्वर्गे पूर्वे साध्या देवा महिमानो महात्मानः संति, ह शब्दः पादपूरणे ॥ १६ ॥ इति ॥

'त्वेति संप्रार्थ्य, ॐ विष्वक्सेनाय नमः, इति निर्माल्यं क्षिप्त्वा शालग्रामशिलारूपं तं भगवन्तमुपयुक्तस्थाने धृत्वा तत्पादोदकं पूजान्ते कुशमूलेन तुलसीदलेन वा ।

ॐ शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् ।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥

इति पठन् शिरसि निदध्यात् । एवं तत्पादोदकं सर्वपूजान्ते भक्त्या—

ॐ अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥ इति पिबेत् ।

इति संक्षिप्तशालग्रामपूजाविधिः समाप्तः ॥

अथैवं देवषट्कं संपूज्याचारात्तद्भिन्नस्येष्टदेवतात्वे तां पूजयेत् । देवषट्कपूजा च स्मार्तमन्त्रैः स्मार्तविधिना च निर्दिष्टा । इष्टदेवतापूजा चागमोक्तविधिनैव प्रचुरतया प्रचलतीति विधिविरोधात् तंत्रोक्तविधेः स्वातन्त्र्येण वक्तव्यत्वाचात्र तामप्रदर्श्य तत्प्रेमिमहोदयानां सविधे 'आगमपटलं' प्रकाशयितुमीहे ।

अथ पार्थिवशिवलिङ्गपूजा—

एतदंगत्वेन कीर्त्तिमुखपूजामाह–आह्निकतत्त्वे—

तथाहि–अक्षतान्यादायैकस्मिन् पात्रे ॐभगवन् कीर्त्तिमुख इहागच्छ इह तिष्ठेत्यावाह्य पञ्चोपचारैः संपूज्य ॐभगवन् कीर्त्तिमुख पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छेति विसर्जयेत् ॥

अथ पार्थिवशिवलिङ्गपूजाऽवश्यकतामाह–शिवरहस्यादौ—

अपूज्य पार्थिवं लिंगं योऽन्यद्देवं प्रपूजयेत् ।
वृथा भवति सा पूजा स्नानदानादिकं वृथा ॥

---

१. अयं च विधिः शालग्रामशिलोपरि यदा विष्णुपूजा तदा । अथ शालग्रामशिलाया अभावे तु तिलान् गृहीत्वा यथोक्तरूपं विष्णुं ध्यात्वा ॐ भूर्भुवः स्वर्भगवन् विष्णो इहागच्छेत्यावाह्य इह तिष्ठेति संस्थाप्य पूर्वोक्तविधिना संपूज्य ॐ भगवन् विष्णो पूजितोसि प्रसीद क्षमस्व स्वस्थानं गच्छेति विसर्जयेदिति विशेषः ।

२. अयं देवः विष्णोर्निर्माल्यधारी, यथा पुराणसमुच्चये—

निर्माल्यधारी विष्णोस्तु विष्वक्सेनश्चतुर्भुजः । शङ्खचक्रगदापाणिर्दीर्घश्मश्रुजटाधरः ॥
अदत्त्वा तस्य यो भागं मर्त्यो विष्णोः सदा प्रियः ।
सम्पूज्य देवदेवेशं नरकं परिपच्यते ॥ इति ॥



वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम् ।
अनभ्यर्च्य न भुंजीत भगवंतं त्रिलोचनम् ॥
लिङ्गानामपि सर्वेषां पार्थिवं लिङ्गमुत्तमम् ।
तस्य संपूजनादेव सर्वान् कामानवाप्नुयात् ॥

वर्णभेदेन मृद्भेदो यथा लिङ्गपुराणे—

विप्रे गौरा स्मृता मृच्च बाहुजे पीतवर्णका ।
वैश्ये कृष्णा समाख्याता रक्ता चरणसम्भवे ॥

त्याज्या यथा पद्मपुराणे—

श्मशाने मृतभूमौ च नीलिक्षेत्रे च या भवेत् ।
ऊषरे ग्रामपार्श्वे च दुष्टकर्मस्थलेऽपि च ॥
नदीपारे वृक्षमूले छाया यत्र विभीतकी ।
मृत्तिका वर्जयेत् प्राज्ञस्त्वशुद्धा यज्ञभूमिषु ॥

लिङ्गपरिमाणं यथा शिवरहस्ये—

कार्यं ह्यष्टाङ्गुलं लिङ्गं ह्यथवा द्वादशाङ्गुलम् ।
द्वात्रिंशदङ्गुलं वापि शुद्धशोधितया मृदा ॥
लिङ्गं षडङ्गुलान्न्यूनं न कर्त्तव्यं कदाचन ।
ततोऽधिकं तु कर्त्तव्यं स्वस्वशक्त्यनुसारतः ॥

विभूतिरुद्राक्षधारणावश्यकता तत्रैव—

विना रुद्राक्षभस्मभ्यां पूजयेद्यः सदाशिवम् ।
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ॥

त्याज्यजलं यथा काशीखण्डे—

शूद्रानीतं स्त्रियानीतं वामहस्ताहृतं तथा ।
अन्यपूजावशिष्टं च जलं त्याज्यं शिवार्चने ॥

मुखवाद्याऽवश्यकता—लिङ्गेश्वरतंत्रे—

शिवलिङ्गं समभ्यर्च्य मुखवाद्यं वरानने ! ।
अवश्यमेव कर्त्तव्यमकृते पापभाग् भवेत् ॥

पूजाविधिश्च यथा—द्वितीयभागोक्तमन्त्रेण भस्मत्रिपुण्ड्रं विधाय रुद्राक्षमालां परिधाय—ॐ हराय नम इति शुभमृत्तिकामाहृत्य ॐ महेश्वराय नम इति सङ्घट्य ॐ शूलपाणये नमः ॐ शूल

पाणे इह प्रतिष्ठितो भव, इति संस्कारं ( प्राणप्रतिष्ठां ) विधायाक्ष-
तमादाय—
'ध्यायेन्नित्यं महेशं रजतगिरिनिभमि'त्युक्तप्रकारं ध्यात्वा ॐ पि
नाकधृषे नमः ॐ पिनाकधृक् इहागच्छ इह तिष्ठेत्यावाह्य स्थापयि-
त्वा जलान्यादाय ॐ नमस्ते० इति षोडश[1] मन्त्राँस्तदशक्तावेक-
मन्त्रं वा पठित्वा, एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि
ॐ शिवाय नमः, ॐ नमः शिवाय । एवमेवाक्षतादीनि दद्यात्।
पुष्पदानमन्त्रस्तु पञ्चदेवपूजोक्तप्रकारेण बोध्यः । ततो वामावर्त्तेन
लिङ्गं पूर्वाद्याग्नेयान्तमष्टसु दिक्षु वक्ष्यामष्टमूर्त्तीर्वक्ष्यमाणमन्त्रैर्गन्धा-
क्षतपुष्पैः पूजयेत् । तथाहि—ॐ सर्वाय क्षितिमूर्त्तये नम इति प्रा-
च्याम् । ॐ भवाय जलमूर्त्तये नम इत्यैशान्ये[2] ॐ रुद्रायाग्निमूर्त्तये
नम इति उदीच्याम् । ॐ उग्राय वायुमूर्त्तये नम इति वायव्याम्।
ॐ भीमायाकाशमूर्त्तये नम इति प्रतीच्याम् । ॐ पशुपतये यजमान-
मूर्त्तये नम इति नैर्ऋत्याम् । ॐ महादेवाय सोममूर्त्तये नम इति दक्षि-
णस्याम् । ईशानाय सूर्यमूर्त्तये नम इति आग्नेय्याम् । ततः ॐ नमः
शिवायेत्यष्टाक्षरमन्त्रं यथाशक्ति जप्त्वा जलमादाय ॐ महादेवाय नमः,
ॐ महादेव पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छेति विसर्ज्य,
ॐ चण्डेश्वराय नम इति निर्माल्यं क्षिपेत् ॥

ॐ नमस्ते रुद्र मन्यव उतोत इषवे नमः । बाहुभ्यामुत ते नमः॥१॥
या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तन्वा शन्तमया
गिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्य-
स्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥ ३ ॥
शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्ज-
गदयक्ष्मꣳसुमना असत् ॥ ४ ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो
भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परा-
सुव ॥ ५ ॥ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनꣳ
रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ईमहे ॥ ६ ॥ असौ

यद्रोदनं रु दुःखं द्रावयति नाशयतीति रुद्रः । यद्वा रवणं रुत् ज्ञानं राति
ददातीति रुद्रः। हे रुद्र? ते तव मन्यवे क्रोधाय नमोऽस्तु। उतोत समुच्चये, अपि
ते तव इषवे बाणाय नमः। अपि च ते तव बाहुभ्यां नमः, अस्त्विति सर्वत्राध्याहार्यम्।

हे रुद्र ! या ते तव तनूः शिवा शान्ता, अघोरा सौम्या अपापकाशिनी पापा-
भावफलदायिनी या पुण्यफलमेव ददाति न तु पापफलमिति भावः। हेगिरिशंत!
( गिरौ कैलाशे स्थितः, शं सुखं प्राणिनां तनोति विस्तारयतीति, अथवा गिरौ
शेते गिरिशः भ्रमति गच्छति जानातीति वाऽन्तः सर्वज्ञः गिरिशश्चासावान्तश्चेति
गिरिशंतः शकन्ध्वादित्वात्साधुस्तत्सम्बुद्धौ गिरिशन्त इति) तया शंतमया सुख-
तमया तन्वा नोऽस्मानभिचाकशीहि अभिपश्येति मन्त्रार्थः ॥ २ ॥

हे गिरिशन्त ! यामिषुं बाणं हस्ते पाणौ बिभर्षि धारयसि, किं कर्तुम्
अस्तवेऽसितुं शत्रून्प्रति क्षेप्तुमित्यर्थः । हे गिरित्र ! गिरौ भूतानि, गिरिं वा
त्रायते तत्सम्बुद्धिः ) तामिषुं शिवां कल्याणकारिणीं कुरु, किं च पुरुषं पुत्रपौत्रा-
दिकं जगज्जंगमं गराश्वादिकं मा हिंसीः मा वधीरिति ॥ ३ ॥

हे गिरिश ! शिवेन मङ्गलरूपेण वचसा वचनेन त्वाम् अच्छ त्वां प्राप्तुं वयं
वदामसि वदामः प्रार्थयामहे, किं वदाम इत्यत आह–नोऽस्माकं सर्वमित् सर्वमेव
( इच्छब्द एवकारार्थे ) जगत् जङ्गमरूपं पश्वादि, अयक्ष्मं नीरोगं सुमनाः
शोभनं मनः यथा येन प्रकारेण असत् भवति तथा कुर्वित्यर्थः ॥ ४ ॥

रुद्रो मामध्यवोचत् ऐश्वर्येण वक्ता ( रुद्रोऽपि सेवकं मां सर्वाधिकं वदति,
यथायं सेवकः सर्वाधिको भवत्विति, तेनोक्ते मम सर्वाधिक्यं भविष्यत्येवेत्याशंसा)
कीदृशो रुद्रः अधिवक्ताऽधिवदनशीलः प्रथमः मुख्यः पूज्यत्वात्, दैव्यो देवेभ्यो-
हितः, भिषक् रोगनाशकः एवं परोक्षमुक्त्वा प्रत्यक्षमाह—हे रुद्र ! सर्वानहीन्
सर्पादीन् जम्भयद् विनाशयन्, अधराचीरधोऽधोगमनशीलो जातुधान्यो राक्षसीः
परासुव परिक्षिप अस्मत्तो दूरीकुरु ॥ ५ ॥

आदित्यरूपेण रुद्रः स्तूयते, अभिनयेन दर्शयन्नाह—योऽसौ प्रत्यक्षो रुद्रो
रविरूपः ये रुद्रा एनं रविरूपमभितो दिक्षु प्राच्यादिदिक्षु श्रिताः किरणरूपेण,
सहस्र-संख्याः, एषां हेडः क्रोधमस्मदपराधजं ( वयं तम् ) अव ईमहे निवार-
यामः, कीदृशो रुद्रः–ताम्र उदयेऽत्यन्तं रक्तः, अरुणो रक्तोऽस्तकाले, उतापि च
बभ्रुः पिंगलवर्णोऽन्यदा, सुमङ्गलः सर्वमङ्गलप्रवर्त्तक इत्यर्थः ॥ ६ ॥

योऽसावादित्यरूपो रुद्रोऽपसर्पति, उदयास्तसमयौ कुर्वन् निरन्तरं गच्छति,

१. नमस्ते रुद्रेति मन्त्रान् वक्ष्यामः ।
२. ऐशान्ये कोणे इति शेषः । दिशांतिरोधे ईशान्यामिति युक्तः पाठः ॥

योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः स दृष्टो मृडयाति नः ॥ ७ ॥ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्त्वा नोऽहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्ज्याम् । याश्च ते हस्त इषवः परा ता भगवोव्वप ॥ ९ ॥ विज्ज्यन्धनुः कपर्दिनो विशल्यो वाणवाँ २ उत। अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥ १० ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ ११ ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधिस्तवा-

कीदृशोऽसौ नीलग्रीवोऽस्तमयेऽयं सूर्यो नीलकंठ इव लक्ष्यः, विलोहितो विशेषेण रक्तः, उताप्यर्थे, एनं गोपा गवां प्रवेशकालं मन्यमानाः, गोपाला वेदोक्तसंस्कारहीना वाऽदृशन् पश्यन्ति उदहार्यो जलहारिण्यो योषितो वैनमदृशन् स रुद्रो दृष्टः सन् नोऽस्मान् मृडयाति सुखयत्वित्यर्थः ॥ ७ ॥

नीलग्रीवाय श्रीनीलकंठाय, सहस्राक्षाय सहस्रनेत्राय इन्द्रस्वरूपिणे, मीढुषे सेक्त्रे वृष्टिकर्त्रे पर्यन्यरूपाय रुद्राय नमोऽस्तु। अथोऽपि चास्य रुद्रस्य ये सत्वानः भृत्यास्तेभ्योऽहं नमोऽकरं करोमीति यावत् ॥ ८ ॥

हे भगवः ( भगं षड्विधमैश्वर्यमस्त्यस्येति भगवांस्तस्य छांदसत्वात्साधुः ) हे भगवन् रुद्र ! धन्वन उभयोरात्न्योर्द्वयोः कोट्योः स्थितां ज्यां मौर्वी त्वं प्रमुञ्च दूरीकुरु, याश्च ते तव हस्ते इषवो बाणास्ता इषूः परावप पराक्षिपेत्यर्थः ॥ अस्य कपर्दिनो जटाजूटवतो रुद्रस्य धनुर्विज्यमस्तु विगतगुणं भवतु बाणवानिषुधिर्विशल्योविगतशल्योऽस्तु, उतापि चास्य या इषवः शरास्ता अनेशन् नष्टा भवंतु, निषङ्गधिः खड्गकोशः आभुः रिक्तोस्तु ॥ १० ॥

हेमीढुष्टम ! सेक्तृतम ! ववर्षुक !, ( अतिशयेन मीढुवान् मीढुष्टमः ) ते तव हस्ते या धनुर्हेतिः धनूरूपेनायुधं बभूव स्थितः (एकं ते पदं पादपूरणाय) तया धनूरूपया हेत्या, अयक्ष्मया निरुपद्रव्या, विश्वतः सर्वतो अस्मान् परिभुज परिपालय ॥ ११ ॥

हे रुद्र ! ते तव धन्वनो हेतिर्धनुःसम्बन्धि आयुधं, विश्वतः सर्वतोऽस्मान् परिवृणक्तु त्यजतु मा हन्तु, अथोऽपि च यस्तव इषुधिर्बाणस्तम् अस्मन् अस्मात अस्मत्तः सकाशात्, आरे दूरे निधेहि स्थापय ॥ १२ ॥



रेऽस्मन्निधेहि तम् ॥ १२ ॥ अवतत्य धनुष्ट्वँ सहस्राक्ष शतेषुधे। निशीर्य शल्यानाम्मुखाशिवो नः सुमना भव ॥ १३ ॥ नमस्ते आयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥ मा नो महान्तमुत मा नो अर्भकम्मा न उक्षन्तमुत मा न उक्षितम्। मा नो व्वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्र रीरिषः ॥१५॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः मानो वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे ॥ १६ ॥

ततः सर्वदेवपूजोपकरणद्रव्यैः प्रतिपत्तिरूपेण ॐब्रह्मणे नम इति भूमौ पूजा[1] कार्या, समंत्रकब्रह्मपूजाया निषिद्धत्वात् ॥

इति श्रीरमाकान्तठक्कुरेण संगृहीते पौरोहित्यकर्मसारे
तृतीयभागे पूजादर्शाभिधः प्रथमः परिच्छेदः ॥

हे सहस्राक्ष ! हे शतेषुध ! ( शतमिषुधयो यस्य स शतेषुधिः ) त्वं धनुरवतत्य अवतार्य, शल्यानां फलानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा, नोऽस्मान्प्रति, शिवः शांतः, सुमनाः शोभनचित्तो भव गृहाणेत्यर्थः ॥ १३ ॥

हे रुद्र ! ते तव आयुधाय बाणाय, नमोऽस्तु नतिरस्तु, कीदृशाय अनातताय धनुषि अनारोपिताय, धृष्णवे धर्षणशीलाय रिपून् हंतुं प्रगल्भायेति यावत्, उतापि च ते तव उभाभ्यां नमः, ते तव धन्वने धनुषे नमः ॥ १४ ॥

हे रुद्र ! नमोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा वधीर्मा हिंसीः उतापि च नोऽस्माकमर्भकं बालं मा वधीः, उतापि च उक्षंतं सेचन्तं तरुणं मा वधीः, उतापि च न उक्षितं सिक्तं गर्भस्थं मा वधीः, नः पितरं जनकं मा वधीः, उतापि च नो मातरं जननीं मा वधीः, प्रिया वल्लभाः, तन्वः शरीराणि पुत्रपौत्ररूपाणि त्वं मा रीरिषः मा हिंसीः ॥ १५ ॥

हे रुद्र ! नोऽस्माकं तोके पुत्रे, तनये पौत्रे मा रीरिषः हिंसां मा कुर्वित्यर्थः। न आयुषि जीवने मा हिंसीः, नो गोषु धेनुषु, नोऽश्वेषु तुरगेषु मा हिंसीः। नोऽस्माकं भामिनः क्रोधयुतानपि वीरान् मर्त्यान् मा वधीः, वयं च हविष्मंतो हविर्युक्ताः, सदमित्सदैव, त्वा त्वां हवामहे यागाय आह्वयामः, त्वदेकशरणा वयमिति भावः ॥ १६ ॥

1. यत्तु—यदि मेऽस्ति तपस्तप्तं गुरवस्तोषिता यदि।
सर्वब्रह्मसमूहेषु स्थानेषु विविधेषु च। न तु ते ब्राह्मणाः पूजां करिष्यन्ति कदाचन ॥

## अथ विद्यारंभः। अक्षरारंभश्च।

तथाहि—पंचमे वर्षे रविगुरुचन्द्रताराशुद्धौ शुक्लपक्षेऽप्रसुप्ते विष्णौ शुभे दिने भवति।

पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम्।
स्वविद्यासूत्रकारांश्च स्वविद्याश्च विशेषतः॥
प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्।
अध्यापयेच्च प्रथमं द्विजाशीर्विप्रपूजनम्॥

तत्र क्रमः—[1]कुशतिलजलान्यादाय ॐअद्येत्यादि अस्य चिरजीविनः शिशोरुपस्थितशरीराविरोधेन दीर्घायुर्बलपुष्टिनैरुज्यप्राप्तिपूर्वकसाङ्गामुकविद्याप्राप्तिकामः साङ्गसकलवर्णमालाप्राप्तिकामो वा श्रीगणपत्यादिपूजनमहं करिष्ये॥ इति सङ्कल्पं कुर्यात्ततः—गणपति–हरिं–लक्ष्मीं–सरस्वतीं पञ्चोपचारैः पूजयेत्। ततो व्याकरणारम्भे पाणिनिं व्याकरणविद्यां च, एवमेव[2] वैशेषिकारम्भादावूह्यम्। इति प्रत्येकमावाह्य पूजयेत्। ततः प्राकृतविद्यामारभेत्–प्राङ्मुखो गुरुः पश्चिमाभिमुखं शिशुं समुपवेश्य [1]खटिकां गृहीत्वाऽमतण्डुलोपरि शिलां धृत्वा तदुपरि सिद्धिरस्त्वित्यादिकां कादिक्षांतां देशीयवर्णमालां[2] पंक्त्या लिखित्वा पश्चात्समुपविष्टं तं शिशुं लेखयेद्वाचयेच्च। ततः शिशुर्दण्डवद् भूमौ प्रणमेत् द्रव्यादिना गुरुं सन्तोषयेच्च, गुरुस्तं कुलाचारं देशाचारं शिष्टाचारं च शिक्षयेत्। ततः सुवासिन्यो मङ्गलगीतादिकं कुर्युः। ततो दूर्वाक्षतम्।

इति पद्मपुराणीयसावित्रीकृतशापेन ब्रह्मणोऽपूज्यत्वात्तत्पूजाकथनमयुक्तमिति तन्न, पूजयिष्यन्ति ब्रह्माणं नरा भक्तिसमन्विताः। तेषामसौ धन धान्यं दाताऽयुष्यं सुखानि च।

इति ब्रह्मपूजाफलप्रदर्शकगायत्रीशापोद्धारवचनस्य तदग्रे दर्शनेन—

अद्यप्रभृति यः पूजां मन्त्रयुक्तां करिष्यति। तव मर्त्यो धरापृष्ठे यथाऽन्येषां दिवौकसाम्।
भविष्यति च तद्वंशो दरिद्रो दुःखसंयुतः॥

इति स्कंदपुराणीयमन्त्रपूर्वकब्रह्मपूजानिषेधप्रदर्शकसावित्रीकृतशापवचनदर्शनेन च शापस्य समन्त्रनित्यपूजामात्रनिवृत्तिपरत्वात्। अमन्त्रकपूजा स्यादेवेति निश्चयः।

न च सर्वदेवपूजान्ते तत्करणे मानाभाव इति वाच्यम्,
तव मन्त्रं न गृह्णन्ति केऽपि वेश्याऽभिशापतः। यदन्यदेवपूजायां तव पूजा भविष्यति॥
अन्यदेवपूजायां सत्यां पूजान्ते इत्यर्थः, इति ब्रह्मवैवर्त्तवचनोत्तरार्द्धस्य जागरूकत्वात्।

१. अथाचाराच्छिशोः पित्रादिरहिते पीतवाससी कटिसूत्रं यज्ञोपवीतमङ्गुरीयमाचार्याय समर्प्य शिशुमग्रे कृत्वैनं पाठ्यं शिक्षयेति विनीतः प्रार्थयेत्। शिशुश्च समाचारादत्रैव नूतनवस्त्रादिकं परिदधाति॥

२. वैशेषिकारम्भे तु–कणादमुनिं वैशेषिकविद्यां। न्यायशास्त्रारम्भे तु अक्षपादमुनिं न्यायविद्यां चेति क्रमः॥

व्याकरणारम्भे प्रथमं 'वृद्धिरादैच्' इति सूत्रं पाठयेदेवमेवान्यत्राप्यूह्यम्॥



इत्यक्षरारम्भविधिः।

अथाक्षरारम्भदिवसमाह—

गणेशं गरुडेशं च वाणीं लक्ष्मीं प्रपूज्य च।
सौम्यायने शुभे काले स्वाध्याये पञ्चमाब्दके॥
मृदुक्षिप्रे श्रुतौ स्वातौ मित्रर्क्षे शिवभाद्द्वये।
[3]चरोनाङ्गे शुभे वारे गृह्णीयात्कठिनीं शिशुः॥

विद्यारम्भदिवसमाह—

कठिन्युदितदेवांश्च स्वविद्यां सूत्रकारकम्।
शिवं नवग्रहांश्चैव पूजयित्वा विधानतः॥
गुरुः पूर्वमुखः शिष्यं पश्चिमास्यं च पाठयेत्।
नक्षत्रतिथिवाराद्यैः सर्वैः कठिनिकोविदैः॥

अथ गृहप्रवेशः—

ये च मासा गृहारम्भे प्रशस्तास्त एव तन्निवेशनेऽपि बोध्याः।

अथ मासाः—

वैशाखे श्रावणे मार्गे फाल्गुने च विशेषतः।
गृहारम्भः प्रशस्तः स्यान्मध्यमः कार्त्तिके शुचौ॥
परिशेषास्तु ये मासा ये च न्यूनाधिमासकाः।
ते सर्वे वर्जनीयाः स्युर्गृहारम्भे विचक्षणैः॥

१. खटिकां—खड़ी इति लोके प्रसिद्धम्॥

२. देशीयवर्णमालां—मिथिलायां मैथिलीं वर्णमालां (तिरहुता) च॥
मिथिलायाः परिमाणत्वे च—
प्राच्याम्—कौशिकीति यावत्। दक्षिणस्याम्—भागीरथीति यावत।
प्रतीच्याम्—गण्डकीति यावत्। उदीच्याम्—हिमवानिति यावत्॥

३. चरोनाङ्गे—चराख्यलग्नरहितलग्ने स्थिरद्विःस्वभावलग्ने इति यावत्।

शुक्लपक्षे भवेत्सौख्यं कृष्णे तस्करतो भयम् ।
इति सामान्यतः प्रोक्ता पक्षशुद्धिर्मनीषिभिः ॥

अथ नक्षत्रविचारः—ज्यौतिषे—

ज्येष्ठापुनर्वसुयुतं गृहारम्भोदितं च यत् ।
तत्सर्वं योजयेद्वेश्मप्रवेशे दैवचिन्तकः ॥

मत्स्यपुराणे—

अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम्[1] ।
स्वाती हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ॥
आदित्यभौमवर्जाश्च सर्वे वाराः शुभावहाः ॥

राजमार्त्तण्डे—

आदित्ये[2] ज्यभरोहिणीमृगशिरश्चित्रा धनिष्ठोत्तरा
पौष्णी[3] विष्णुशतानुराधपवनः शुद्धैः सुताराग्वितैः ।
सौम्यानां[4] दिवसेऽथपापरहिते योगे विरक्ते तिथौ
विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्यं शुभम् ॥

दिवसे विशेषः—

रवावग्निः कुजे नाशः शशिन्यर्थं शनौ[5] भयम् ।
सुरेज्ये भार्गवे सौम्ये[6] गृहारम्भं मनोरमम् ॥

अथ योगाः—

वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः ।
विष्कम्भगण्डयोश्चैव गृहकर्म्म न कारयेत् ॥

ये च वारा योगाश्च गृहारम्भे प्रशस्तास्ते एव तत्प्रवेशेऽपि ॥

१. ऐन्दवं चन्द्रदैवतं मृगशिरा इति यावत् ॥

२. आदित्योऽदितिदैवताकः पुनर्वसुरित्यर्थः, इज्यमं पुष्यः बृहस्पतिदैवताक इति यावत् ॥ इज्यो गुरुः, भेतिनक्षत्रवाचकः ॥

३. पौष्णी रेवती, विष्णुः श्रवणा, शतं शतभिषा, पवनः स्वातीति ॥

४. सौम्यानां शुभानां दिवसे इति भावः ।

५. शनौ गृहारम्भे निषिद्धेऽपि मत्स्यपुराणीयवचनैकवाक्यतया वास्तवधिकरणस्थयोगवचनैकवाक्यतया च शनौ गृहारम्भप्रवेशौ स्यातामृ—यथा सप्तयोगः— शनौ स्वातौ हरौ लग्ने शुक्ले पक्षे च सप्तमी । श्रावणे शुभयोगे च सप्त योगाः प्रकीर्तिताः । इति । हरिः सिंहः ॥ ६. सौम्ये बुधे ॥



अथ संमुखराहुविचारः—

त्रिभिस्त्रिभिश्च मार्गाद्यैः राहुस्तिष्ठति पूर्वतः ।
विपरीतक्रमेणैव द्वारं संमुखतस्त्यजेत् ॥

अन्यच्च—'चित्रानुराधामृगपौष्णपुष्यस्वातीधनिष्ठाः श्रवणं च मूलम् ।
वारेष्वसूर्यक्षितिजेष्वरिक्ता-तिथौ प्रशस्तौ[1] भवनप्रवेशः ॥

अथ गृहप्रवेशे घटचक्रशुद्धेरावश्यकताऽतो घटचक्रशुद्धिमाह ज्यौतिषे-गृहारम्भप्रयोजकवृषचक्रशुद्धिन्तु वक्ष्यामः ।

घटचक्रशुद्धिः—

पञ्चाष्टाष्टर्त्तु सूर्यर्क्षाद् घटे स्यादशुभं शुभम् ॥[2]

अन्यच्च—

प्रवेशकलशेऽर्कर्क्षान् पञ्चनागाष्टषट्क्रमान् ।
अशुभं च शुभं ज्ञेयमशुभं च शुभं तथा ॥

प्रवेशप्रकारमाह पुराणसमुच्चये—

कृत्वाऽग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रफलपुष्पदलोपशोभम् ।
दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो मङ्गल्यशान्तिनिलयं निलये विशेत्तु ॥

विष्णुधर्मोत्तरे—

गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही ।
अनुलिप्तः सुखी स्रग्वी सपत्नीकस्तथैव च ॥

अथ विधिः—

ॐ शांतिः शांतिः शांतिरित्युच्चार्य सपत्नीको गृहस्वामी परिवारसमन्वितो गृहद्वारे दध्यक्षतादियुक्तं पूर्णकलशं धेनुं दक्षिणावर्त्तमग्निञ्च दृष्ट्वा द्विजवरानग्रतः कृत्वा ॐद्यौः शान्तिरित्यादिशान्तिमन्त्रान् पठन्तं गणकं हिरण्यवस्त्रादिभिः सन्तोष्य श्रोत्रियान् शिल्पज्ञविधिज्ञपौरानपि

१. वारेष्वसूर्यक्षितिजेष्वरिक्तेत्यनेन शनौ गृहप्रवेशो विधीयते 'आदित्यभौमवर्जं च सर्वे वाराः शुभावहा' इत्यनेन गृहारम्भोऽपि शनौ विधीयते, शनौ भयमित्यनेन निषिध्यत इति परस्परविरोध इति चेदत्र केचित् मांगलिकमण्डपादिगृहारम्भः पापाहे शनौ निषिद्धः सामान्यगृहारम्भो विधीयतेऽतो न दोष इति ॥

२. यस्मिन्नक्षत्रे सूर्यस्तन्नक्षत्रतः पञ्च नक्षत्राणि, अशुभम् । अष्टौ शुभम् । पुनरष्टौ, अशुभम्, षट्शुभमित्यर्थः ॥

सन्तोष्य श्रुतिघोषयुक्तं गृहं प्रविश्य स्वयमाचार्यद्वारया वा पूजनादिकं कुर्यात् ॥

अथ मंगलार्थं तत्र गृहे चतुर्षु कोणेषु चतुरः पूर्णघटान् संस्थाप्य तदुपरिमृत्तिकापात्रे आमतण्डुलान् दत्त्वा दीपं दद्यात् ॥ तत्राचार्यपक्षे[1] वरणम्—ॐ अद्यामुके मास्यमुकपक्षेऽमुकतिथावमुकगोत्रस्यामुकशर्म्मणो मम कर्त्तव्यगृहप्रवेशांगभूतपूजनादिकर्म कर्त्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलयज्ञोपवीतकटिसूत्रांगुरीयकवासोयुगैराचार्यत्वेन त्वामहं वृणे इत्याचार्यं वृणुयात् । ततः ॐ वृतोऽस्मीत्याचार्यप्रतिवचनानन्तरम्, ॐ यथाविहितं कर्म कुरु, इति यजमानेनोक्तो ॐ करवाणीत्याचार्यो वदेत् । अथाचार्यो गृहाभ्यन्तरे पञ्चदेवतापूजाविष्णुपूजां च कृत्वा संकल्पं कुर्यात्, तद्यथा ॐ अद्येत्याद्यमुकगोत्रस्यास्य श्रीअमुकशर्म्मणो यजमानस्योपस्थितशरीराविरोधेन सकलारिष्टझटितिप्रशमनपूर्वकाधिभौतिकाधिदैवि[2]काध्यात्मिकोपद्रवशान्तिपूर्वकदीर्घायुष्प्रबलपुष्टिनैरुज्यप्राप्तिपूर्वकधनधान्यपरिवारवृद्धिपूर्वकैतद्गृहाधिकरणकस्थिरतरवासकामो गणपत्यादिपूजनं तदङ्गत्वेन घटस्थापनं चाहं करिष्यामि । ततः कलशं स्थापयेत् तत्क्रमोऽस्यैव प्रथमभागे उक्तत्वान्नेहोपन्यस्यते । ततः कलशं पीतवस्त्रेणाच्छाद्य कलशसमीपे हस्तमात्रं[4] खातं कृत्वा जलेनापूर्य तज्जले गणपति—वास्तुपुरुषम्—अष्टनागान्—धरित्रीं पञ्चोपचारैर्वस्त्रादिना च पूजयेत् ।

१. अयं च क्रम आचार्यसत्त्वे बोध्यः । तदभावे यजमानः स्वयं पञ्चदेवता विष्णुं च सम्पूज्य सङ्कल्पं कुर्यात्, तद्यथा—ॐ अद्येत्यादि, अमुकगोत्रस्य मम श्रीअमुकशर्म्मण इत्यादि, घटस्थापनं चाहं करिष्ये, इत्येवं सर्वत्र ।

२. भूतानि व्याघ्रचौरादीन्यधिकृत्य प्रवृत्तमाधिभौतिकम् ॥

३. देवान् विद्युदग्निवज्रादीनधिकृत्य प्रवृत्तमाधिदैविकम् ॥

आत्मानं मनः शरीरं चाधिकृत्य प्रवृत्तमाध्यात्मिकं तच्च कामाद्युद्भवं व्याध्याद्युद्भवं चेति बोध्यम् ॥

४. अत्रेत्थं वदन्त्याचरन्ति च-यत्र नाचार्यवरणं न तत्र खातस्यावश्यकता, किं तु कलशसमीपे पात्रे पूजा कार्या । खातकरणं तु विशेषः एवं न होमे ब्रह्मवरणमिति पाश्चात्याः ॥



तत्र धरित्र्यर्घदानमन्त्रः—

ॐ हिरण्यगर्भे वसुधे शेषस्योपरि शायिनि ।
वसामि तव पृष्ठेऽहं गृहाणार्घं धरित्रि मे ॥

ततो दशदिक्पालान्—नवग्रहान्—ग्रामदेवताः—कुलदेवता—इष्टदेवताः पञ्चोपचारैर्वस्त्रादिना च पूजयेत् ॥

अत्र केचित् तत्तद्वर्णध्यानार्थं नवग्रहान् घटसमीपे तत्तद्वस्तुरचितनवसु कोष्ठेषु पूजयेदिति वदन्ति, तथाहि—

| | | |
|---|---|---|
| केतुः धूम्रवर्णः | चन्द्रः श्वेतवर्णः | कुजः रक्तवर्णः |
| राहुः कृष्णवर्णः | रविः रक्तवर्णः | बुधः पीतवर्णः |
| शनिः कृष्णवर्णः | शुक्रः श्वेतवर्णः | गुरुः पीतवर्णः |

अथ बलिदानम्—तथाहि—

सव्यञ्जनान्नमादाय—

ॐ क्षेत्रपाल नमस्तुभ्यं सर्वकामफलप्रद ।
ममाऽत्र विघ्नशान्ताय गृहाण त्वमिमं बलिम् ॥

ॐ क्षेत्रपालवास्तुपुरुषायैष बलिर्न्नमः । इति पूजितस्थाने बलिं दद्यात् ॥ ततो माषसहितदधिभक्तमादाय—ॐ इन्द्रादिदशदिक्पालेभ्य एष बलिर्न्नमः । ततो नवग्रहेभ्य एष बलिर्न्नमः ॥ ततः पूर्वादिक्रमे बलिं दद्यात् । तथा हि—

पूर्वस्यां दिशि—ॐ अश्ववाहनाय शक्तिसहिताय सूर्यमूर्त्तये तेजोऽधिपतये बलिं गृह्णीष्व स्वाहा ॥

आग्नेयां दिशि—ॐ छागवाहनाय शक्तिसहिताय वैश्वानरमूर्त्तये तेजोधिपतये० ॥

दक्षिणस्यां दिशि ॐ महिषवाहनाय दण्डहस्ताय शक्तिसहिताय यममूर्त्तये तेजोधिपतये० ॥

नैऋत्यां दिशि—ॐ गजवाहनाय वज्रहस्ताय शक्तिसहिताय इन्द्रमूर्त्तये तेजोधिपतये० ॥

पश्चिमस्यां दिशि—ॐ गरुडवाहनाय शङ्खचक्रगदाहस्ताय शक्तिसहिताय विष्णुमूर्त्तये तेजोधिपतये० ॥

वायव्यां दिशि—ॐ क्षेत्रपालाय मृगवाहनाय शक्तिसहिताय वायुमूर्त्तये तेजोधिपतये० ॥

उत्तरस्यां दिशि—ॐ कुबेराय सोमक्षेत्रपालाय शक्तिसहिताय सर्वयक्षाधिपतये बलिं गृह्णँस्वाहा ।

शक्तिसहिताय ईशानाय तेजोधिपतये० ॥

नैर्ऋतवरुणयोर्मध्ये—ॐ पातालक्षेत्रपालाय सहस्रफणाय द्विसहस्रलोचनाय वासुकिनागाय शक्तिसहिताय सर्वनागाधिपतये बलिं गृह्णँस्वाहा ॥

इन्द्रैशानयोर्मध्ये—ॐ ब्रह्मरूपाय हंसवाहनाय शक्तिसहिताय आकाशधातुव्यक्तरूपाय तेजोधिपतये० ॥

तत ॐ पितृभ्यो जुष्टं स्वधा ॥

ततोऽवशिष्टं कणशः सकलं दधिभक्तमाषमादाय

ॐ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ।
ते गृह्णन्तु बलिं सर्वे गृहं गृह्णाम्यहं सदा ॥

इति प्रसन्नमना बलिं दद्यात् ।

ततो होमं कुर्यात्—तद्यथा–कुशैर्हस्तमात्रपरिमितचतुरस्रां भूमिं परिसमुह्य तान् कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रादेशमात्रं त्रिरुल्लिख्योल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृद उद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेणाग्निमादाय स्वाभिमुखं निदध्यात् ।

ततो ब्रह्मवरणम्[1]—ॐ अद्य मत्कर्त्तव्यगृहप्रवेशाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलयज्ञोपवीतकटिसूत्राङ्गुरीयकवासोयुगैर्ब्रह्मत्वेन त्वामहं वृणे,

१. संक्षेपेण कर्मकरणे यथा नाचार्यवरणस्यावश्यकता तथा ब्रह्मवरणस्यापीति बोध्यम् ॥



इत्याचार्यवचनानन्तरम् । ॐवृतोऽस्मीति प्रत्युक्तौ । ॐ यथाविहितं कर्म कुरु, इत्याचार्येणोक्ते, ॐकरवाणीति ब्राह्मणो वदेत् ॥ तत आचार्यः स्वयं वा यजमानः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्राह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणम्—बर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तं, ब्रह्मणोऽग्निपर्यन्तं, नैर्ऋताद्वायव्यान्तमग्नितः प्रणीतापर्यन्तं कुर्यात् । ततः पवित्रच्छेदनकुशैः स्वप्रादेशमितपवित्रे छित्त्वा दक्षिणहस्तेन प्रोक्षणीजलं त्रिरूर्ध्वमुत्क्षिप्य प्रणीताजलेन प्रोक्षणीमभ्युक्ष्य प्रोक्षणीजलेनासादितवस्तुसेचनम् । आज्यमुत्पूयावेक्ष्य सत्यपद्रव्ये तन्निरस्य ततस्त्रिः स्रुवप्रतपनम् पूर्ववत् प्रोक्षणीमुत्पूयोपयमनकुशान् वामहस्तेनादायसमिधस्तिस्रस्तूष्णीमग्नौ क्षिपेत् ।

ततः सपवित्रप्रोक्षण्युदकेनाग्निं पर्युक्ष्य पातितवामजानुर्ब्रह्मणाऽन्वारब्धो घृतपाय[2]साभ्यां जुहुयात् ॥

ॐ प्रजापतये स्वाहा, इदं प्रजापतये, इति मनसा । ॐ इन्द्राय स्वाहा, इदमिन्द्राय । ॐ अग्नये स्वाहा, इदमग्नये । ॐ सोमाय स्वाहा इदं सोमाय ।

ततः पञ्चवारुणीहोमः—

ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठो वह्नितमः सोशुचानो विश्वेद्विशांसिप्रमुमुग्ध्यस्मत् स्वाहा, इदमग्नीवरुणाभ्याम् ॥ १ ॥ ॐ सत्वन्नो अग्ने वमो भवोतीनेदिष्ठो अस्या ऊषसो व्युष्ठो । अवयक्ष्व नो वरुणँ रराणो वोहिमृडीकँ सुहवो न एधि स्वाहा, इदमग्नये ॥ २ ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषयज्ञँ स्वाहा, इदमग्नीवरुणाभ्याम् ॥ ३ ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशाचितता महान्तः । तेभिर्नो अद्य सविततं विष्णुर्विश्वेमुञ्चन्तु मरुतः स्वर्क्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवे

१. ब्रह्मवरणपक्षमधिकृत्यैतत् ।

२. घृतपायसाभ्यां जुहुयादितिशिष्टमैथिलाः । घृतेनेति केचित् । अगराद्यष्टगन्धेनेति पाश्चात्याः । यथाशक्तिनिषिद्धतरलभ्यद्रव्यैरिति तीर्थचरणाः ॥

विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ॥ ४ ॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमं श्रथाय । अथावयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा, इदं वरुणाय । इति ॥

ततो व्याहृतिहोमः—

ॐ भूः स्वाहा, इदं भूः ॐ भुवः स्वाहा, इदं भुवः । ॐ स्वः स्वाहा, इदं स्वः । ततो महाव्याहृतिहोमः—ॐ भूर्भुवः स्वः स्वाहाः ॥

ततो नवग्रहहोमं[1] कुर्यात् । मंत्राश्च प्रथमभागे द्रष्टव्याः । ततो दिक्पालहोमः । तत्र मन्त्राः—

ॐ त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवँ शुरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्तिनो मघवाधात्विन्द्रः स्वाहा, इदमिन्द्राय ॥ १ ॥ ॐ अग्निदूतं पुरोदधे हव्यवाहमुपब्रुवे । देवा आसादयादिह स्वाहा, इदमग्नये ॥ २ ॥ ॐ यमेन दत्तं त्रित एनमायुनागेन्द्र एणं प्रथमो अध्यतिष्ठत् । गंधर्वो अस्य रशनामगृभ्णात् सूराद्श्वं वसवोनिरतष्ट स्वाहा, इदं यमाय ॥ ३ ॥ ॐ एषाते निर्ऋते भागस्तं जुषस्व स्वाहा, इदं निर्ऋतये ॥ ४ ॥ ॐ इमम्मे वरुणश्रुधीहवमद्या च मृडय त्वामवस्यूराचके स्वाहा, इदं वरुणाय ॥ ५ ॥ ॐ वातो वा मनो वा गंधर्व्वाः सप्तविंशतिः । ते अग्रे श्वमयुञ्जंस्ते अस्मिन्यवमादधुः स्वाहाः, इदं वायवे ॥ ६ ॥ ॐ सोमव्रते तवमनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहिस्वाहा, इदं कुबेराय ॥ ७ ॥ ॐ अभित्वा शूरनोनुमोदुग्धा इव धेनवः ईशानमस्य जगतः स्वर्द्दशमीशानमिन्द्र तस्थुषः स्वाहा, इदमीशानाय ॥ ८ ॥ ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा, इदं सर्पेभ्यः ॥ ९ ॥ ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन

1. नवग्रहहोमे समिधा ग्राह्या इति केचित्, अयमेव च व्यवहारः प्रचलितपाश्चात्येषु ॥ घृतपायसौ, यथालभ्यद्रव्याणि वेति तीर्थ—समिधो यथा, संस्कारतत्त्वे याज्ञवल्क्यः ॥

अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥

अर्कः आक इति भाषा । खदिरः खैर इति । अपामार्गः चिरचिरी इति ॥ पिप्पलः पीपर इति । उदुम्बरः गूलर इति भाषा ॥



आवः सबुध्न्या उपमा मस्य विष्ठः सतश्च योनिमसतश्च विवः स्वहा, इदं ब्रह्मणे ॥ १० ॥

ततः ॐ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा स्वाहा, इति मन्त्रेणाष्टोत्तरशतं होमं कुर्यात् ॥

ततः ॐ अग्नये स्विष्टिकृते स्वाहा, इदमग्नये स्विष्टिकृते । ॐ प्रजापतये स्वाहा, इदं प्रजापतये । ततः संस्रवप्राशनमाचमनं च कुर्यात् ।

ततो[1] ब्रह्मदक्षिणा—

ॐ अद्य कृतैतद्धोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायाऽमुकशर्म्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे । ॐ स्वस्तीति ब्रह्मणः प्रतिवचनम् ।

ततः ॐ सुमित्रियान आप ओषधयः सन्तु । इति प्रणीताजलमाम्रपल्लवेन त्रिः शिरसि क्षिपेत् ॥ ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । इत्यैशान्यां प्रणीतां न्युब्जीकुर्यात् ॥ ततो बर्हिष उत्थाय घृताक्तां जूटिकां बद्ध्वा हस्तेनैव जुहुयात् तत्र मन्त्रो यथा—

ॐ देवागातु विदो गातुं वित्वा गातुमित् । मनस्वत इमं देव यज्ञँ स्वाहा वातेधाः स्वाहा, इदमग्नये ॥

1. ब्राह्मणाऽभावे दक्षिणावर्त्तपञ्चशतकुशात्मकं ब्रह्माणं कुर्यात् तत्रोक्तवरणस्थानेऽयं सङ्कल्पः कार्यः ॐ अद्य मत्कर्त्तव्यगृहप्रवेशाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्त्तुं त्वम्मे ब्रह्मा भवेति । अत्र वरणप्रतिवचनादिकं नास्ति । दक्षिणादाने तु—ॐ अद्येत्यादि प्रजापतिदैवतं ब्रह्मणे दक्षिणां नम इति ॥ ननु गृहारम्भं विना गृहप्रवेशोऽसंभवो गृहस्यासत्त्वादतो गृहारम्भप्रयोजकवृषचक्रशुद्धिं निर्वक्ति ग्रन्थकर्त्ता यथा—

त्रिवेदाब्धित्रिवेदाब्धिद्वित्रिभेष्वर्कतः शशी ।
कुर्याल्लक्ष्मीं समुद्वासं स्थैर्यं लक्ष्मीं दरिद्रताम् ॥
धनं व्याधिं क्रमान्मृत्युं प्रवेशारम्भयोर्वृषः ।

यस्मिन्नक्षत्रे सूर्यस्तन्नक्षत्रतः शशिनक्षत्रं त्रिवेदेति क्रमेण लक्ष्मीमित्यनुक्रमशः फलं ददातीति । अत्र प्रवेशपदं नार्थकमिति ज्ञेयमिति विवेकः ॥

तत उत्थाय यजमानदक्षिणकरस्पृष्टाचार्यस्तदभावे स्वयं यजमानः फलसहिताज्याहुतिं स्रुवेण जुहुयात्तत्र मन्त्रः । ॐमूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृतम् आजातमग्निं कविꣳ सम्राजमतिथिञ्जनानामासन्नापात्रं जनयन्तु देवाः स्वाहा, इदमग्नये ॥

छन्दोगस्तु—ॐपूर्णहोमं यशसे जुहोति योऽस्मै ददाति वरं वृणे यशसा भामि लोके स्वाहा, इदमग्नये ॥

ततस्त्र्यायुषकरणं तद्यथा—

स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ॐत्र्यायषं जमदग्नेरिति ललाटे, ॐकश्यपस्य त्र्यायुषमिति ग्रीवायाम्, ॐ यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले, ॐतन्नो अस्तु त्र्यायुषमिति हृदि त्र्यायुषं कुर्यात् । एवं यजमानस्यापि तन्नो इत्यत्र तत्ते इति विशेषः ॥

तत आचार्याय यजमानो दक्षिणां दद्यात् । तथाहि—ॐ अद्य कृतैतद्गृहप्रवेशांगभूतपूजनादिकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणायाचार्याय दक्षिणां तुभ्यमहं सम्प्रददे । ॐस्वस्तीति प्रतिवचनमाचार्यो दद्यात् । अथाचार्यस्तदभावे स्वयं यजमानो वा कर्मदक्षिणां कुर्यात्—

ॐ अद्य कृतैतद्गृहप्रवेशाङ्गभूतपूजनादिकर्म्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ॥

ततो यथाशक्ति भूयसीं दक्षिणामुत्सृजेत् । यथा—

ॐ अद्यकृतैतद्गृहप्रवेशाङ्गभूतकर्म्मणि न्यूनातिरिक्तदोषसमाधानार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां दातुमहमुत्सृजे । इति ॥

ततो यदि छन्दोगस्तर्हि वामदेव्यगानम् ॥

अथ पञ्चाम्रपल्लवैः कलशजलमानीयाचार्यो यजमानं स्वयं वा यजमानः स्वमूर्द्धानमभिषिञ्चेत् ॥ तत्र मन्त्रः—

ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते (मे) ।



आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥
ब्रह्मणा सहितः शेषो दिक्पालाः पांतु ते (मे) सदा ।
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥
बुद्धिर्लज्जा वपुः शांतिस्तुष्टिः कांतिश्च मातरः ।
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ।
ग्रहास्त्वा(मा)मभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥
देवदानवगंधर्वा यक्षराक्षसपन्नगाः ।
ऋषयो मनवो गावो देवमातर एव च ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ।
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये ।
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥
एते त्वा(मा)मभिषिञ्चन्तु सर्वकामार्थसिद्धये ।

अथ श्रोत्रियान् गणकादींश्च भोजयेत् । ततः सपरिवारः स्वयं मिष्टान्नं भुंजीत ॥

इति दरभङ्गामण्डलान्तर्गतलोहनाग्रामनिवासिना विद्यावाचस्पति पं० श्रीरमाकान्तठक्कुरेण संगृहीते पौरोहित्यकर्मसारे तृतीयभागे गृहप्रवेशविधिः समाप्तः ।

---

अथ गृहदेवतास्थापनविधिः—

श्रीप्रदं सर्वगीर्वाणस्थापनञ्चोत्तरायणे[1] ।
विचैत्रेष्वेव मासेषु माघादिषु च पञ्चसु ॥
वलक्षपक्षः[2] शुभदः समस्तः सदैव तत्राद्यदिनं विहाय ।

---

१. अथोत्तरायणयाम्यायने आह ज्यौतिषे—

मकरादिगते षट्के सूर्यस्यैवोत्तरायणम् । कर्कादिषट्कगे सूर्ये दक्षिणायनमुच्यते

२. वलक्षपक्षः शुक्लपक्षः ।

अन्त्यं त्रिभागं परिहृत्य[1] कृष्णपक्षेऽपि शस्तः शुभवासरश्च ।
याम्यायनेऽपि देवानां स्थापनं नवरात्रिषु ॥[2]

अथ विधिः—

स्थापनपूर्वदिने केशान् वापयित्वा निरामिषमेकवारं भुक्त्वा प्रसन्नमना उत्तरदिने प्रातःस्नानं विधाय कृतनित्यक्रियो यजमानः शुद्धासने उपविश्य ।

ॐ ये चात्र विघ्नकर्त्तारो दिवि भुव्यन्तरिक्षगाः ।
विघ्नभूताश्च ये चान्ये मम स्थापनकर्मसु ॥
मयैतच्छोधितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥

इति पठित्वा दशदिक्षु सर्षपमक्षतं वा विकिरेत्, ततो—

१. अन्त्यं त्रिभागं परिहृत्य एकादशीतः अमापर्यन्तं परिहृत्येत्यर्थः । दशमी यावत् कृष्णोपि शुभवासरः शस्त इति यावत् ।

अथ प्रसङ्गात् प्रदक्षिणाक्रमं निर्वक्ति—

चण्डीमेकं रविं सप्त शिवं चार्धप्रदक्षिणम् । नारायणं चतुर्वारं त्रिवारं तु विनायकम् ॥ इति ।

२. विशेषमाह रुद्रयामले—

त्रिपुरा कालिका दुर्गा भवानी गिरिजा तथा ।
एताः पञ्चभगिन्यस्ता भवन्ति कुलदेवताः ॥
प्रपूज्या युगपत्सर्वाः सर्वसाम्राज्यदायिकाः ।
चतुर्वर्गेप्सुभिः सर्वैर्गृहस्थैर्गिरिकन्यके ॥
पुनस्तद्वामभागे तु शीतला पृथगेव हि ।
अस्या अपि महाभागे देवी च मनसाऽभिधा ॥ इति ॥

अत्र कुलदेवताया दक्षिणभागेऽन्नपूर्णाऽग्रे लक्ष्मीरिति केचित्तत्र कुलाचारोऽनुसन्धेय इति तीर्थः ॥

अथ गृहाग्नेयकोणेष्वेव देव्याः स्थापनमित्यत्र हेतुमाह शिल्पशास्त्रे गृहप्रकरणे—इष्टधातूपलादीनां सर्वदेशो यथाशुचिः । तथैव तृणकाष्ठानामग्निकोणःप्रशस्यते ॥ इति ॥

तत्र महातीचार–मलमास–क्षयमास–व्यतीपातादियोगाशुभोत्पातादिदोषवर्जितशुद्धसमये । त्रिचैत्रापाढोत्तरायणे माघेिने शुक्लपक्षे पञ्चमीपर्यन्तं कृष्णपक्षे च मृदुध्रुवक्षिप्रचरे नक्षत्रे रविकुजशनिवर्जितदिवसे भद्रादिदोषरहिततिथौ द्विःस्वभावलग्ने सुमुहूर्त्ते कुलदेवतायाः स्थापनं कार्यमिति विशेषमाह कश्चित् ॥



गायत्रीं पठित्वा पञ्चगव्येन स्थापनस्थलं [1]संशोध्य ततः—

ॐ सद्यो जातं प्रपद्यामि सद्योजाताय वै नमः । भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः इति मन्त्रेण गङ्गाजलेन संशोध्य माषपरिमितं हिरण्यं पञ्चरत्नं रूप्यञ्च पूगीफलानि च तस्मिन् धृत्वाऽगाधजलादानीतां प्रशस्तमृत्तिकां भूमौ धारयेत् । ततः शान्ति–मन्त्र–शङ्ख–पटहध्वनि–तूर्यघोषैस्तत्स्थानं पूरयेत् नृत्यगीतादिकमाचरेत् । स्वयं तु [2]कुशहस्तस्ताश्चतुरङ्गुलमुच्छ्रितारत्रिमात्रप्रमाणां चतुरस्रां निम्नोन्नतरहितां समां पिण्डिकां कुलक्रमानुसारेण विधाय, तदुपरि भित्तौ सजलशालिचूर्णेन स्त्रिया देवीस्थापनकोष्ठमुपलेपयेत् । तत उत्तरक्रमेण सिन्दूररेखापञ्चकं स्त्रीद्वारा कर्त्तव्यम् । तदधः कुलक्रमानुसारेणालक्तपत्रमेकं भित्तौ मुष्टिनिश्चलं यथा भवेत्तथा जटेत् । तदधोऽञ्चलं पट्टवस्त्रं दद्यात् । प्रथमं पुरातनं दत्त्वा ततो नवीनं च दद्यात् । यत्र पुरातनमञ्चलं नास्ति तत्र नूतनमेव दद्यात् । ततो लेलिहानमुद्रया स्थण्डिलं स्पृष्ट्वा 'ॐ मनोजूतिरिति प्रथमभागोक्तमन्त्रेण वाजसनेयी, छन्दोगश्चेत् ॐवाङ्मनःप्राणोऽपानो व्यानश्चक्षुः श्रोत्रं शर्म वर्म वर्तिः प्रतिष्ठेति मन्त्रेण सयवकुशहस्तेन ॐ अस्मत्कुलदेवते श्री अमुकदेवि इह सुप्रतिष्ठिता भव ततः पुष्पचन्दनाक्षतान्यादाय [3]ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हौँ हँसः अस्मत्कुलदेवतायाः श्री अमुकदेवतायाः प्राणाः, इह प्राणाः ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हौँ हँसः अस्मत्कुलदेवतायाः श्री अमुकदेवताया जीव इह स्थितः ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हौँ हँसः अस्मत्कुलदेवतायाः श्री

१. मृत्तिकायामेव गृहदेव्याः स्थापनन्तत्र हेतुः—वशिष्ठपञ्चरात्रे—

प्रतिमा सर्वदेवानां स्त्रियाः स्पर्शेन हीयते ।
तथा पीठोपि देवेशि पुण्यमृत्स्थण्डिलं विना ॥ इति ॥

२. तत्र कश्चित्सङ्कल्पमाह तन्मते तद्वाक्यं यथा—ॐअद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रस्यामुकशर्मणो मम सपरिवारस्य सकलविघ्ननिवृत्तिपूर्वकाखिलकल्याणप्राप्तिकामस्त्रिपुरसुन्दर्यादिपञ्चभगिन्याः श्री दक्षिणाकालिकादेव्याः स्थापनमहं करिष्ये, इति । एवमन्यत्रापि यथाफलं वाक्यमनुसन्धेयम् ॥

३. संशोधितेप्सितपिण्डिकोपरि दक्षिणहस्तं विनिवेश्यैतत् कर्मेति तीर्थः ।

अमुकदेवतायाः सर्वेन्द्रियाणीह तिष्ठन्तु. ॐ आँ ह्रीं क्रों यँ रँ लँ वँ शँ षँ सँ हँ ह्रौं हँसः अस्मत्कुलदेवतायाः श्रीअमुकदेवताया वाङ्मनश्चक्षुस्त्वक्श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति मन्त्रेण प्राणप्रतिष्ठां कृत्वा हस्तमुत्थाय पिण्डिकोपरि सजलशालिचूर्णेन स्त्रिया लेपनं,तदुपरि सिन्दूररेखां च कारयित्वा षोडशोपचारैः पञ्चोपचारैर्वा देवीं सम्पूजयेद् वित्तशाठ्यं[1]नैव कुर्यात्। ततः प्रचुरं पायसं दद्यात्, तत्र मन्त्रः-इदं पायसनैवेद्यं श्री अमुकदेव्यै नम इत्युत्सृज्य हस्ताभ्यां तत्पात्रं गृहीत्वोत्तिष्ठन्—

ॐ त्वदीयं वस्तु देवेशि तुभ्यमेव समर्पितम्।
गृहाण सुमुखी भूत्वा प्रसीद परमेश्वरि ॥

इति सम्प्रार्थ्योपविश्य दक्षिणां कुर्यात्। तथाहि—

कुशत्रयतिलजलान्यादाय—ॐ अद्य कृतैतदस्मत्कुलदेवतायाः श्री अमुकदेवतायाः प्राणप्रतिष्ठाकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे, इत्युत्सृज्य पुरोहिताय प्रतिपादयेत्।

ततः कुमारिकाः सधवास्त्रियश्च भोजयेत्। वस्त्रादिना सन्तोषयेच्च। ततः पुरोहितादीन् ब्राह्मणान् भोजयेत्। स्वयमपि सपत्नीकः सपरिवारः भुञ्जीत। तत उत्सवादिना दिवसं यापयेत्।

अत्र गजशालाया अश्वशालाया रथ्याया वल्मीकस्य नदीसङ्गमस्य ह्रदस्य गोशालायाश्च मृद एकत्रीकृत्य तत्सर्वं गङ्गाजलादिपञ्चगव्येन सार्द्रं कृत्वा तत्र किञ्चिद्द्रव्यं क्षिप्त्वा पिण्डिका कर्त्तव्येति विशेषः ॥

अश्वत्थतलस्य गङ्गाया बिल्ववृक्षतलस्य च मृदः केचिदिच्छन्ति ॥

इति दरभङ्गामण्डलान्तर्गतलोहनाग्रामनिवासिना श्रोत्रियवंशोद्भवेन पं० श्रीरमाकान्तठक्कुरेण संगृहीते पौरोहित्यकर्मसारे तृतीयभागे श्रीमद्गृहदेवतास्थापनविधिः समाप्तः।

---

१. कुलामृते—वित्तशाठ्यं परित्यज्य सर्वकर्माणि कारयेत्।
वित्तशाठ्यं निहन्त्याशु पुत्रानायुर्यशो धनम् ॥ इति।



अथ दीक्षाविधिः—तत्र कालाः गौतमीये—

मन्त्रस्वीकरणं चैत्रे बहुदुःखफलप्रदम्[1]।
वैशाखे रत्नलाभः स्याज्ज्यैष्ठे तु मरणं भवेत् ॥
आषाढे बन्धुनाशः[2] स्यात्पूर्णायुः श्रावणे भवेत् ॥
प्रजानाशो भवेद् भाद्रे सर्वत्र सुखमाश्विने।
कार्त्तिके मन्त्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ॥
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्धनम्।
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ॥

अत्र विशेषमाह—

तत्रापि शारदी पूजा यत्र दुर्गा गृहे गृहे।
तत्र दीक्षा प्रकर्त्तव्या मासर्क्षादीन्न शोधयेत् ॥

इत्येवं प्रकारेण तिथ्यादीन् संशोध्य दीक्षा कार्या। तस्या आवश्यकत्वं द्वितीयाभाग उक्तत्वात्तिथ्यादिशुद्धिं ग्रन्थविस्तरभयाच्च नेहोपन्यस्यते। अथ तावत्संक्षेपेण दीक्षाप्रकारमाह-तत्र सद्गुरुलक्षणम्—

शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान्।
शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥
आश्रमी ध्याननिष्ठश्च तन्त्रमन्त्रविशारदः।
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥

अत्र पित्रादितो दीक्षानिषेधमाह योगिनीतन्त्रे—

पितुर्मन्त्रं न गृह्णीयात्तथा मातामहस्य च।
सोदरस्य कनिष्ठस्य वैरपक्षाश्रितस्य च ॥

तथा—

न पत्नीं दीक्षयेद्भर्त्ता न पिता दीक्षयेत्सुताम्।
न पुत्रं च तथा भ्राता भ्रातरं न च दीक्षयेत् ॥

---

१. अत्र मासः सौरः। 'सौरमासि शुभा दीक्षा न चान्द्रे न च तारके' इत्युक्तत्वात्। यत्तु—'मन्त्रारम्भस्तु चैत्रे स्यात्समस्तपुरुषार्थद' इति। तदेतद्गोपालमन्त्रविषयं गौतमीये उक्तत्वात् ॥

२. यदप्याषाढे निषेधमाह तदपि श्रीविद्यातिरिक्तविषयं ज्येष्ठे मृत्युप्रदा चैव आषाढे धनसम्पद' इत्युक्तत्वात् ॥

अन्यच्च शक्तियामले—

[1]पितुर्दीक्षा यतेर्दीक्षा दीक्षा च वनवासिनः ।
विरक्ताश्रमिणो दीक्षा न सा कल्याणदायिका ॥

अथ पुरुषो मातुः स्त्री श्वश्वाः दीक्षां गृह्णेत चेत्तत्र नैव मतभेद इति द्वितीयभागोक्तिं द्रढयत्यागमकल्पद्रुमः । तथाहि—

स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता ।
स्वप्नलब्धा च या विद्या तत्र नास्ति विचारणा ॥

अन्यच्च-मत्स्यसूक्ते—

ग्रहणे च[2] महातीर्थे नास्ति कालस्य निश्चयः ।
सोमग्रहे विष्णुमन्त्रं सूर्यं शक्तिं न चाचरेत्

विष्णुयामले—

देव्याबोधे समारभ्य यावत्स्यान्नवमीतिथिः
कृता हि सुबुधैर्दीक्षा सर्वाभीष्टफलप्रदा ॥

शिष्यलक्षणमाह रुद्रयामले—

सुशीलश्च कुलीनश्च धर्मी दांतः क्रियारतः ।
वाङ्मनःकायवसुभिर्गुरुसेवासु तत्परः

अथ संक्षिप्तदीक्षाविधिः—

तत्र पूर्वदिने गुरुशिष्यौ कृतैकाहारौ कृतमुण्डनौ च भवतः । उत्तरदिने कृतनित्यक्रियो गुरुर्विहितकालेऽहते वाससी परिधाय पूर्वाभिमुखः शुभासनोपविष्टः प्रथमं देयमन्त्रं तद्देवतां च यथालाभोपचारैः सम्पूज्य देयमन्त्रं यथाशक्ति जपित्वा, जलपूर्णं साक्षतं शङ्खमभ्यर्च्य कृतनित्यक्रियमहतवाससं पश्चिमाभिमुखं शिष्यं स्वाग्रे समुपवेश्य तदम्बुनाऽष्टदूर्वादलैरष्टवारं मूलमुच्चार्य्य शिष्यशिरोऽभिषिञ्चेत् । अत्राचारात् शिष्यः

१. पितुर्दीक्षा, यतेः संन्यासिनो दीक्षा, वनवासिनो दीक्षा, विरक्ताश्रमिणः आश्रमरहितस्य वैरागि इति यावत् दीक्षा न शुभेत्यर्थः । यत्तु पाश्चात्ये गृहस्थाश्रमिणे वैरागी दीक्षां ददाति तन्न प्रमोदावहम् । अयं भावः—आश्रमिणं तद्वानेव विरक्ताश्रमं विरक्ताश्रमी एव दीक्षयेदिति शास्त्रसिद्धान्तः ॥

२. महातीर्थान्याह यामले-पुण्यक्षेत्रं कुरुक्षेत्रं देवपीठचतुष्टयम् । प्रयागं श्रीगिरिं काशीं महातीर्थं प्रचक्षते ॥ पाठचतुष्टयं च उड्डीयान जालंधर-पूर्णगिरि कामरूपाख्यम् ।



सद्द्रव्यपूगीफलादीनि गुरुसन्तोषवस्तूनि गुरुचरणयोर्दद्यात् । ततो गुरुः शिष्यशिरो वस्त्रेणाच्छाद्य तच्छिरसि करं निधायाष्टवारं मूलं जपित्वा पुंसो दक्षिणकर्णे त्रिवारं वामकर्णे चैकवारं, स्त्रिया वामकर्णे त्रिवारं दक्षिणकर्णे चैकवारं मन्त्रमुपदिशेत्, ततस्तद्देव्यादिकं मन्त्रार्थं च कथयेत् । ततः शिष्येण तद्देवतां तन्मन्त्रेण यथालाभोपचारैः सम्पूजयेत् । ततः शिष्यो यथाशक्ति मन्त्रं जपित्वा देवतायै समर्प्य गुरवे यथाशक्ति दक्षिणां[1] दद्यात् ॥

तथाहि—

ॐ अद्य कृतैतदमुकमन्त्रसांगतार्थं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय गुरवे दक्षिणां तुभ्यमहं सम्प्रददे इति गुरोः करे दद्यात् । ॐस्वस्तीति गुरुर्वदेत् । ततः द्रव्यादिना गुरुं परितोष्य दण्डवद् भूमौ प्रणमेत् । गुरुश्च सन्तुष्टः शिष्यमुत्थापयेदनेन—

ॐ उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान्भव ।
कीर्त्तिश्रीकान्तिमेधायुर्बलारोग्यं सदास्तु ते ॥ इति ।

ततो गुरुः पूजितदेवतां विसर्जयेत् । अथ शिष्यो मन्त्रग्रहणसामग्रीं गुरवे निवेद्य तम्भोजयित्वाऽन्यांश्च ब्राह्मणान् कुमारीं सुवासिनीं च भोजयित्वा स्वयं भुञ्जीत ॥

निम्ननिर्दिष्टानामाद्यवर्णविशिष्टानां साधकानां प्रधानचक्रेभ्य उद्धृताः प्रायशोऽधोनिर्दिष्टा एव मंत्रा देवताश्च स्युस्त एवाधो निर्दिश्यन्ते ।

अकथहचक्रम्—ऋणधनीचक्रादीनां बहुत्वाद्विस्तरभियाऽत्र लेखो न कृतः । तान् दिदृक्षुभिरन्यत्र ते द्रष्टव्याः शक्त्युपासकैः कालिकादेरकाक्षरादिमंत्राणां प्राशस्त्याच्छिष्टाचाराच्च सति संभवे त एव ग्राह्याः । तेषामसंभवे गणेशादीनाप्येकाक्षरमंत्रा ग्राह्याः ।

१. दक्षिणादाने विशेषमाह—पुराणसमुच्चये—

गुरवे दक्षिणां दद्यात् प्रत्यक्षाय महात्मने । सर्वस्वं वा तदर्द्धं वा तदर्द्धं वा तदाज्ञया ॥
नो चेद्धि तादृशी शक्तिः कथमस्य भविष्यति । वित्तशाठ्य परित्यज्य दद्याच्च गुरवे सदा ॥
गुरुदेवं वञ्चयित्वा यः कुर्याद्धनसंचयम् । तेन तद्भुज्यते नैव ह्रियते राजतस्करैः ॥

अथ यस्य माता मंत्रदापने न शक्ता, तन्मंत्र विहीना वा, तं कः शिक्षयेदिति चेदत्र यो विद्यादानदाता स एव तं शिक्षयेन्मन्त्रमुपदिशेदिति पाश्चात्यतत्त्वविदः ॥

| साधकानाम् | मंत्राः | देवताः |
|---|---|---|
| आकार–इकार–ऋकार– लृकार–एकार–ओकार– ककार–गकार–ङकार– झकार–टकार–णकार– थकार–धकार–बकार– मकार–रकार–षकार– क्षकारादिनाम्नाम्— | क्रीँ | कालिका |
| आकार–ऊकार–ॡकार– खकार–चकार–जकार– ञकार–ढकार–तकार– दकार–भकार–यकार– सकारादिनाम्नाम्— | स्त्रीँ | तारा |
| ईकार–ऋकार–औकार– फकार–लकार–शकारादि-नाम्नाम्— | श्रीँ | लक्ष्मीः |
| ऐकार–घकार–ठकार– सकारादिनाम्नाम्— | ऐँ | सरस्वती |
| हकारादिनाम्नाम्— | ह्रीँ | भुवनेश्वरी |
| उकार–ङकार–डकार– पकारवकारादिनाम्नाम्— | गँ | गणेश इति॥ |

इति पं० श्रीरमाकान्तशर्मणा संगृहीते पौरोहित्यकर्मसारे

तृतीयभागे संक्षिप्तदीक्षाविधिः समाप्तः ॥

---

अथ षटकर्णनिर्णयः—

ननु कर्णषटकदोषनिवारणार्थं कर्णस्य वेधनमुच्यते। सोदरभ्रातॄणां संस्काराणां च पौर्वापर्यक्रमः, कर्णवेधस्यासंस्काररूपत्वान्न तथा नियमः। तथाहि मलमासतत्त्वे माण्डव्यः—

यदाऽपत्यद्वयं तिष्ठेत् सम्भवोऽथ परस्य च।
कर्णषट्कं विजानीयाद्दहितं तत्त्रयस्य च॥



इत्याशंक्य तयोर्मध्ये शुद्धिर्यस्याथ वत्सरे।
कर्णवेधो हितस्तस्य नात्र कार्या विचारणा॥
षट्कर्णोत्पत्तिमाशंक्य भानोः शुद्धावमेऽपि च।
कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणं भवेत्॥

अस्य कालमाह राजमार्त्तण्डे—

न जन्ममासे न च चैत्रपौष न वर्षयुग्मे न हरौ प्रसुप्ते।
रवौ च दुष्टे न च कृष्णपक्षे न जन्मभे कर्णविधिः प्रशस्तः॥

अन्यच्च ज्योतिस्तत्त्वे गर्गः—

कर्णवेधव्रतं कुर्यादुदङ्मार्गस्थिते रवौ।
दक्षिणाशास्थिते भानौ नैव कुर्यात्कथंचन॥

इति षट्कर्णनिर्णयः समाप्तः॥

[1]अथ च्छागबलिदानविधिः तत्र प्रथमं देवीपूजा—

ॐ नमः श्रीदुर्गादेव्यै। स्वयमुदङ्मुखश्छागं पूर्वमुखं सिन्दूरादिनाऽलंकृत्य पाद्यादिभिर्बलिं सम्पूज्य मन्त्रं पठेत्।

ॐ छागत्वं बलिरूपेण मम भाग्यादुपस्थितः।
प्रणमामि ततस्सर्वरूपिणं बलिरूपिणम्॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम्।
चण्डिकाबलिरूपाय बले तुभ्यं नमो नमः॥

इति बलिं प्रणम्य दक्षिणकर्णं धृत्वा—

[2]ॐ यज्ञार्थे पशवः श्रेष्ठा यज्ञार्थे पशुघातनम्।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः॥
ॐ शृङ्गे पृष्ठे ललाटे च मेढ्रे च कर्णपादयोः।
मुञ्चन्तु सर्वगात्राणि छागस्य पशुदेवताः॥

इति पठित्वा कर्णमत्यजन्नेव पशुगायत्रीं जपेत्। तथा हि—ॐ पशु[3]पाशाय विद्महे देवीप्रियाय धीमहि, तन्नः पशुः प्रचोदयात्॥ इति।

---

१. अयं च बलिदानविधिः संक्षेपेण स्मार्त्तविधिनाऽत्र निर्दिश्यते विशेषेण तन्त्रविधिना 'आगमपटले' वक्ष्यते॥ २. 'यज्ञार्थे पशवः सृष्टा' इति पाठान्तरम्।
३. ॐपशुपाशाय विद्महे शिरश्छेदाय धीमहि, तन्नश्छागः प्रचोदयात् इति गायत्रीमंत्रं क्वचिदुपलभ्यते, आचारश्चात्र शरणम्।

तत आचारात् ॐ ऐं ह्रीं श्रीं इति बीजैर्जलपुष्पाक्षतं बलिमृध्नि क्षिपेत्। ततः कुशाक्षतजलान्यादाय ॐअद्येत्यादि अमुकगोत्रस्यामुकशर्म्मणोऽमुकदेवताप्रीतिकामो ( पूर्वाङ्गीकृतं वा ) ऽमुं छागपशुं वह्निदैवतं श्रीअमुकदेवतायै ( अमुकदेवताप्रीतये वा ) तुभ्यं घातयितुमहं समुत्सृज्य इति सङ्कल्प्य खड्गपूजां कुर्यात्, ॐ खड्गाय नम इति खड्गं पाद्यादिभिः सम्पूज्य—

ॐ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते ॥

इति खड्गवन्दनं कृत्वा हस्ते गृहीत्वा छागस्कन्धोपरि वारत्रयं छिन्धीत्युच्चार्य ततः सम्प्रदायानुसारेण परीक्षानन्तरं तं खड्गमन्यस्मिन् ब्राह्मणदक्षिणकरे दद्यात्, स च ब्राह्मणः खड्गं गृहीत्वा देवीं प्रणम्य परीक्षितं छागं छिन्द्यात्। अथ देवीपूजकः स्वयं तच्छिन्नं शिरः सत्वरमुत्थाप्य गृहीत्वा देवीमुखस्पर्शनं विधाय प्रदीपफलगंधपुष्पधूपदीपसहितं तच्छिरो भक्त्या देव्यै दद्यात्। तथा [1]लड्डुकानि दद्यात्।

ततो दक्षिणामुत्सृजेत्तथा हि—कुशादीन्यादाय ॐअद्य कृतैतच्छागबलिदानप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ॥

इति छागबलिदानविधिः ।

---

अथ सूर्यव्रतनियमः—

मलमासमधिकृत्य चिन्तामणौ—

सूर्यव्रतञ्च वैशाखे मलमासो यदा भवेत् ।
तदा तत्रैव कर्त्तव्यं वृषादित्ये न कारयेत् ॥

विहितनिषेधावाह—साम्बपुराणे—

अलिमेषगते भानौ भगवत्यर्क्कवासरे ।

---

1. तथेत्यादेरयं भावः, छागबलिं दत्वा लड्डुकानि दद्यात् । अत्र केश्चित्-देव्यै छागदानं न युक्तं वधत्वाद्विष्णोरप्रियत्वाच्चेति तन्न पशोर्यज्ञार्थत्वात्, ।

यजनांते तदन्नं तु तत्पयो दधि चोत्तमम् ।
मात्स्यं च मायया कृष्णो गिरिर्भूत्वा समश्नुते ॥

इति हरिवंशवचनेन विष्णोरप्रियत्वाभावाच्चेति दिक् ॥



शुक्लपक्षे सविधिव्रतं साम्ब समाचर ॥
धनुर्वृषगते भानौ यः कुर्यात्सवितुर्व्रतम् ।
सप्तजन्मनि कुष्ठी स्याद्दारिद्र्यश्चोपजायते ॥
देवोत्थानात् परं ग्राह्यं व्रतं देवस्य भास्वतः ।
कदाचिदलिमेषार्के कृष्णपक्षे न कारयेत् ॥

अथ पल्लीपतनविचारः—

यदि पतति च पल्ली दक्षिणांगे नराणाम्
स्वजनजनविरोधो वामभागे च लाभः ।
उदरशिरसि कण्ठे पृष्ठदेशे च मृत्युः
करचरणहृदि स्थे सर्वसौख्यं ददाति ॥

अथ नेत्रस्फुरणविचारः—

नेत्रस्योर्ध्वं हरति सकलं मानसं दुःखजालं
नेत्रोपांते दिशति च धनं नासिकांते च मृत्युः ।
नेत्रस्याधः स्फुरणमसकृत् सङ्गरे भङ्गहेतु—
र्वामे चैतत्फलमविफलं दक्षिणे वैपरीत्यम् ॥

वारपरत्वे स्वरशकुनमाह ज्योतिस्सारे—

गुरौ शनौ रवौ भौमे शुभो वै दक्षिणः स्वरः ।
अन्यवारेषु वामस्तु स्वरश्चैव शुभः स्मृतः ॥
निर्गमे वामतः श्रेष्ठः प्रवेशे दक्षिणः शुभः ।
यः स्वरः सैव नासाग्रे योगिनां मतमीदृशम् ॥

गोधूलीज्ञानं तत्शास्त्यं च—

यदा नास्तंगते भानौ गोधूल्या पूरितं नभः ।
सर्वमङ्गलकार्येषु गोधूलिः शस्यते सदा ॥

इति दरभङ्गामण्डलान्तर्गतलोहनाग्रामनिवासिना श्रोत्रियखण्डवलावंशोद्भव पं० श्रीरमाकान्तशर्म्मणा संगृहीते पौरोहित्यकर्मसारे तृतीयभागे गृहप्रवेशादिद्वितीयः परिच्छेदः ।

* शुभमस्तु *

# पौरोहित्यकर्मसारे

## परिशिष्टम्

अथादौ मासनिर्णयः—

एकस्मिन्वत्सरे मासाश्चैत्राद्या द्वादशैव हि ।
तेऽपि नाम्नः प्रभेदेन चत्वारः स्युः [1]प्रकारकाः ॥
सौरश्च सावनश्चैव नाक्षत्रश्चान्द्र एव च ।
एतैरेव समस्तोऽपि व्यवहारः प्रवर्त्तते ॥
विवाहादौ स्मृतः सौरो यज्ञादौ सावनस्तथा ।
[2]क्षौरपैत्र्यादिके चान्द्रो नाक्षत्रश्च तिथिव्रते ।
रविसंक्रान्तितः सौरः[3] [4]सावनस्तूदयावधिः ।
[5]नाक्षत्रो भभ्रमादिन्दोश्चा[6]न्द्रस्त्रिंशत्तिथेः स्मृतः ॥

अन्यच्च—

दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्कर राशिभोगात् ।
त्रिंशद्दिनं सावनमासमाहुर्नाक्षत्रमिन्द्रोर्भगणभ्रमाच्च ॥

अथ तिथीशानाह—

वह्निर्ब्रह्माम्बिका चैव गणेशोहिर्गुहो रविः ।
शिवो दुर्गा यमो विश्वे विष्णुः कामः शिवः शशी ॥

---

१. प्रकारैर्भेदैः कार्यते शब्द्यन्ते इति प्रकारकाः ॥

२. क्षुरकर्मादिकं पितृकर्माब्दिकं ( वार्षिकं ) श्राद्धं क्षौरपैत्र्यं तदादिके, आदिना पार्वणाष्टकाश्राद्धादिर्गृह्यते तथा हि ऋष्यश्रृङ्गः—

विवाहव्रतयज्ञेषु सौरं मासं प्रशस्यते ।
पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥ इति ॥

३. सूरः सूर्यस्तत्कृतः सौरः । रवेर्मेषादिद्वादशसु राशिषु संक्रमणात् प्रवृत्तः । तत्प्रवृत्तिस्त्वंशक्रमेण प्रसिद्धा । तथा चायं मासस्त्रिंशद्दिनात्मको नियतः ।

४. सवनो यज्ञस्तदारम्भोपलक्षितः कालः सावनः । उदयादुदयं यावत् त्रिंशद्दिनात्मक एव मासः ॥

५. इन्दोश्चन्द्रस्य भभ्रमान्नक्षत्रभ्रमात् नक्षत्रभोगेनेति यावत् नाक्षत्रो मासः । अयं च सप्तविंशतिदिनात्मक एव मासस्तावन्मितत्वान्नक्षत्राणाम् ।

६. अयं च चान्द्रो मासो शुक्लादिरमान्तः ।



[1]पक्षत्यादितिथीनां तु पक्षयोरुभयोरपि ।
एते देवगणाः सर्वे पतयः स्युर्यथाक्रमम् ॥

अथ नक्षत्रदेवताः—

[2]अश्वो यमोऽनलो ब्रह्मा शशी रुद्रोऽदितिर्गुरुः ।
सर्पः पिता भगश्चैव अर्यमा च दिवाकरः ॥
त्वष्टा वायुश्च शक्राग्नी मैत्रश्चैव पुरन्दरः ।
निर्ऋतिः सलिलं चैव विश्वेदेवा हरिस्तथा ॥
वसवो वरुणश्चैव अजपादस्तथैव च ।
अहिर्बुध्नस्तथा पूषा क्रमान्नक्षत्रदेवताः ॥

अथ नक्षत्राणां विशेषसंज्ञामाह—

चरं चलं स्मृतं स्वाती पुनर्वसुश्रुतित्रयम्[3] ।
क्रूरमुग्रं मघा पूर्वात्रितयं भरणी तथा ॥
ध्रुवं स्थिरं विनिर्दिष्टं रोहिणी चोत्तरात्रयम् ।
तीक्ष्णं दारुणमाश्लेषा ज्येष्ठाऽऽर्द्रा मूलसंज्ञितम् ॥
लघु क्षिप्रं स्मृतं पुष्यो हस्तोऽश्विन्यभिजित्तथा ॥
मृदु मैत्रं स्मृतं चित्राऽनुराधा रेवती मृगः ॥
मिश्रं साधारणं प्रोक्तं विशाखा कृत्तिका तथा ।
नक्षत्रेष्वेषु कर्माणि नामतुल्यानि कारयेत् ॥

अथ मेषादीनां संज्ञान्तरमाह—

[4]चराख्यश्च स्थिराख्यश्च द्विस्वभावाभिधोऽपि च ।
त्रिभिस्त्रिभिश्च मेषाद्यैर्ज्ञेया द्वादश राशयः ॥
क्रूराक्रूरौ मेषवृषौ युग्मकर्कौ तथैव च ।
द्वाभ्यां द्वाभ्यामनेनैव क्रमेण परिकीर्त्तितौ ॥

अथाहर्वर्णज्ञानम्—

रक्तावङ्गारमादित्यौ श्वेतौ शुक्रनिशाकरौ ।

---

१. पक्षतिः पक्षमूलं प्रतिपदिति यावत् । २. अश्वोऽश्विनीकुमारौ । अनलः अग्निः । शशी चन्द्रः । अदितिर्देवमाता । अजपादः सूर्यविशेषः ।

३. श्रुतित्रयं श्रवणादित्रयं श्रवणा धनिष्ठाशतभिषेति यावत् । ४. चरे लग्ने प्रयातव्यं द्विस्वभावे तथा नरैः । लग्ने स्थिरे न गन्तव्यं यात्रायां क्षेममीप्सुभिः ।

गुरुज्ञौ[1]पीतहरितौ शनिराहू[2]शिती स्मृतौ ॥
धूम्रो हि केतुः सम्प्रोक्तः कार्यज्ञैर्मुनिभिः सदा ॥

अथ युगानां प्रमाणमाह—

[3]द्वात्रिंशद्भिः सहस्रैश्च[4]युक्तं लक्षचतुष्टयम् ।
प्रमाणं कलिवर्षाणां प्रोक्तं पूर्वैर्महर्षिभिः ॥
युगानां कृतमुख्यानां क्रमान्मानं प्रजायते ।
कलेर्मानं क्रमान्निघ्नं चतुस्त्रिद्विमितैस्तथा ॥

अथाषाढपूर्णिमावायुफलम्—

आषाढे पूर्णिमायाञ्चेदनिलो वाति नैरृते ।
अनावृष्टिर्धान्यनाशो जलं कूपे न दृश्यते ॥
आषाढे पूर्णिमायां तु वायव्ये यदि मारुतः ।
(क) धर्मशीलस्तदा लोको धनधान्यं गृहे गृहे ॥
आषाढे पूर्णिमायां तु ईशान्ये वाति मारुतः ।
सुखिनो हि तदा लोका गीतवाद्यपरायणाः ॥
वह्निकोणे वह्निभीतिः पश्चिमे च जलाढ्यम् ।
अन्यत्र यदि वायुः स्यात् सुभिक्षं जायते तदा ॥

शुभकृत्ये वर्जितयोगादिः—

व्यतीपातवैधृत्य[5]मा[6]पर्व भ[7]द्रा

१. ज्ञो बुधः। २. शितिः कृष्णः। शिती धवलमेचकावित्यमरः। मेचकः कृष्णः।

३. कलेः प्रमाणं द्वात्रिंशत्सहस्राधिकलक्षचतुष्टयम् । अयमेवाङ्कश्चतुर्भिर्गुण्येत सङ्कलयेत् ततो योऽङ्को लभ्यते स एव कृतयुगस्य। त्रिभिर्गुण्येत चेत् त्रेतायुगस्य। द्वाभ्यां गुण्येत चेद्द्वापरयुगस्य प्रमाणं भवेद्यथा—

कलियुगस्य प्रमाणम्–४३२००० कृतयुगस्य,—१७२८००० ॥
त्रेतायुगस्य,—१२९६००० । द्वापरयुगस्य—८६४००० ॥

४. द्वात्रिंशता सहस्रैः । (क) धर्मसिद्धिरिति पाठान्तरम् ।

५. अमा–अमावस्या ।

६. चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव चेति ॥

७. भद्राज्ञानमाह ज्यौतिषे–
शुक्ले पूर्वार्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे ।
कृष्णेऽन्त्यार्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशम्भुतिथ्योः ॥ इति ॥



स्तिथेर्वृद्धिनाशौ जनु[1]र्भ ग्रह[2]र्क्षम् ।
[3]कवीज्यास्तसंक्रांतिन्यूनाधिमासं
खजार्को[4]किरिक्तास्त्यजेद्द्रव्यकृत्ये ॥

विष्कम्भवज्रे घटिका हि तिस्रो व्याघातशूले नव पंच जह्यात् । भव्येषु कृत्येष्वतिगंडगंडे षडेव धीरः परिघार्धमाद्यम् ॥

अथाषाढपूर्णिमायां गुरुपूजा—

आषाढपूर्णिमायां विनायकचतुर्थ्यां च गुरुपूजा कार्येति स्मृतितत्त्वविदः ॥

रघुनन्दनप्रभृतिस्त्वाषाढपूर्णिमायां गुरुपूजावश्यकतामुक्त्वा विनायकचतुर्थ्यामन्यतमत्वमाह ।

शिष्टव्यवहारात्त्वाषाढपूर्णिमायामेव गुरुपूजा कार्येति तीर्थचरणाः

अथ विधिः—

उत्तराभिमुखं गुरुं पूर्वाभिमुखश्छात्रः पञ्चोपचारेण यथाशक्ति वा पूजयेत् ।

अहतवाससी मिष्टान्नानि द्रव्याणि च दत्त्वा प्रार्थ्य यथाशक्ति सन्तोषयेदिति ।

अथ कन्यादानविहितनक्षत्राणि—

गृहस्थानां परो धर्मः पाणिग्रहणमेव च ।
तस्मात्तत्समयः स्वीयदेशरीत्योच्यतेऽधुना ॥
[5]मूलाऽनुराधामृगरेवतीषु हस्तोत्तरास्वातिमघासु धात्र्ये ।
ज्येष्ठे तपःफाल्गुनराधमार्गे शुचौ तु पाणिग्रहणं प्रशस्तम् ॥
द्वितीया दशमी चैव तृतीयैकादशी तथा ।
पञ्चमी सप्तमी चैव प्रशस्तोद्वाहकर्मणि ॥
कन्यामिथुनमीनेषु वृषचापतुलासु च ।

१. जनुर्भं जन्मनक्षत्रमिति यावत् ।

२. ग्रहर्क्षं ग्रहेण वेधितं यन्नक्षत्रं तत् ग्रहणकालीननक्षत्रमिति यावत् ।

३. कविः शुक्रः इज्यो गुरुस्तयोरस्तमिति यावत् । ४. आर्किः शनिः ।

५. धात्र्ये—रोहिण्यां–धातृदेवताकनक्षत्रे माघे इति यावत् । तपसि माघे । राधे वैशाखे । शुचाव षाढे ।

किञ्च—रोहिण्युत्तररेवत्यो मूलं स्वाती मृगो मघा ।
अनुराधा च हस्तश्च विवाहे मंगलप्रदाः ॥

उद्वाहः[1] सुप्रशास्तः स्यादिति प्राह पराशरः ॥

लग्नतः शुद्धिमाह गुरुस्तत्रैव—

सप्तमं शुद्धमुद्वाहे यात्रायामष्टमं तथा ।
दशमं च गृहारम्भे चतुर्थं सन्निवेशने ॥

अत्र निषेधमाह ज्यौतिषे—

पूर्वात्रये विशाखायां शिवाद्ये[2] भचतुष्टये ।
ऊढा चाशु भवेत्कन्या विधवाऽतो विवर्जयेत् ॥
[3]वर्जनीया कुहू रिक्ताः शेषाः स्युर्मध्यमा स्मृताः ।
कुजार्कशनिवाराश्च परित्याज्याः प्रयत्नतः ॥

ज्येष्ठे विशेषः—

ज्येष्ठद्वन्द्वं मध्यमं सम्प्रदिष्टं त्रिज्येष्ठं स्यान्नैव युक्तं कदापि ।
[4]केचित्सूर्यं वह्निगं प्रोज्झ्य चाहुर्नैवान्योन्यं ज्येष्ठयोः स्याद्विवाहः ॥

अथ मङ्गलीदोषमाह ज्यौतिषे—

लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे ।
पत्नी हन्ति स्वभर्त्तारं भर्त्तुर्भार्या न जीवति ॥
एवं विधे कुजे संस्थे विवाहो न कदाचन ।
कार्यो वा गुणबाहुल्ये कुजे वा तादृशे द्वयोः ॥

तत्परिहारश्च चिन्तामणौ—

जामित्रे च सदा सौरिर्लग्ने वा हिबु[5]केऽथ वा ।

---

१. विवाहमधिकृत्य नक्षत्रमाह पारस्करः—
( सू० 'त्रिषु त्रिषूत्तरादिषु' इति । उत्तरादिषु त्रिषु नक्षत्रेषु विवाहः प्रशस्त इत्यर्थः । तथा च-उत्तराफल्गुनी-हस्त-चित्रासु, उत्तराषाढ-श्रवणा-धनिष्ठासु, उत्तराभाद्र-रेवती-अश्विनीषु प्रशस्तः । २. शिवाद्ये शिवदेवताकाद्ये, भचतुष्टये नक्षत्रचतुष्टये, तथा आर्द्रा–पुनर्वसु पुष्य-अश्लेषासु ।

३. विवाहकालमधिकृत्य पराशरः—
विवाहमारभ्य चतुर्थमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् ।
तदाशु वैधव्यमवाप कन्या जीवेत्पतिश्चेदनपत्यता चेति ॥

४. वह्निः कृत्तिका तत्स्थः सूर्यश्चेद्विवाहस्त्रिज्येष्ठेऽपि स्यादिति केचित् । नैव-स्यादित्यपरे ॥

५. जामित्रे सप्तमे । हिबुके चतुर्थे ।



नवमे द्वादशे चैव भौमदोषो न विद्यते ॥

अथ वधूप्रवेशमुहूर्त्तः—

[1]समाद्रिपञ्चाङ्कदिने विवाहाद्वधूप्रवेशोऽष्टिदिनान्तराले ।
शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेष्टम् ॥
ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले ।
[2]वधूप्रवेशः सन्नेष्टो रिक्तारार्कबुधेपरैः ॥

वधूप्रवेशो न दिवा प्रशस्तो[3]गृहप्रवेशो न निशि प्रशस्तः ।
दिवा च रात्रौ गृहप्रवेश एवं प्रवेशस्त्रिविधः प्रशस्तः ॥

अथ द्विरागमनमुहूर्त्तः—

विवाहाद्विषमे वर्षे कुम्भमेषा[4]लिगे रवौ ।
बलिन्यर्के विधौ जीवे शुभाहे चाश्विनीमृगे ॥
रेवतीरोहिणीपुष्ये त्र्युत्तरे श्रवणत्रये ।
हस्तत्रये पुनर्वस्वोस्तथा मूलानुराधयोः ॥
कन्यामीनतुले युग्मे[5]वृषे प्रोक्तबलान्विते ।
लग्ने पद्मदलाक्षीणां द्विरागमनमिष्यते ॥
सम्मुखे दक्षिणे शुक्रे नो गच्छेत्तु कदाचन ।
गर्भिणी तु विगर्भा स्यान्नवोढा बन्ध्यतामियात् ॥
बालकश्चेद्विपद्येत विगेहादपि चेद्व्रजेत् ।

अन्यच्च—

गर्भिणी च सवत्सा च नवोढा भूपतिस्तथा ।
पदमेकन्न गच्छेत्तु राहौ सम्मुखदक्षिणे ॥

---

१. समः समदिवसः-द्वितीयश्चतुर्थः षष्ठ इत्यादिक्रमेण बोध्यः । अद्रिः सप्त । अङ्को नव । अष्टिः षोडश–अष्टिदिनान्तराले षोडशदिनमध्ये । अक्षः पञ्चेति यावत् ॥

२. रिक्तातिथिः । आरो मङ्गलः । अर्को रविः बुधश्चैतस्मिन् वधूप्रवेशो नेष्टः ॥ श्रोत्रं श्रवणा । वसुर्धनिष्ठा । अनिलः स्वाती ॥

३. न च 'दिवा च रात्रौ च गृहप्रवेश' इत्यनेन रात्रौ गृहप्रवेशो विधीयते इति महान्विरोधः निशि निषिद्धत्वादिति वाच्यं प्रासादप्रवेशादिभेदेन गृहप्रवेशस्य नानात्वात् । गृहप्रवेशो हि निशि प्रशस्त इति पाठान्तरत्वाच्चेति ॥

४. अलिर्वृश्चिकः । ५. युग्मे मिथुने ।

शुक्रपरिहारस्तत्रैव—

एकग्रामे चतुष्कोणे दुर्भिक्षे राजविग्रहे ।
विवाहे[1] तीर्थयात्रायां प्रतिशुक्रो न विद्यते ॥

अन्यच्च—

पित्र्ये गृहे चेत्कुच[2]पुष्पसम्भवः
स्त्रीणां न दोषः प्रतिशुक्रसम्भवः । इति-

बृहज्ज्योतिःसारे ॥

केचित्तु शुक्रान्धे तत्परिहारमिच्छन्ति । तथा हि—

रेवत्यादिमृगान्ते च यावत्तिष्ठति चन्द्रमाः ।
तावच्छुक्रो भवेदन्धः सम्मुखे दक्षिणे शुभः ॥

अथ 'पुंनाम्नो नरकात् त्रायते' इति व्युत्पत्तिदर्शनेन, 'अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च' इति भारतदर्शनेन च नूनमस्मिन्नसारे संसारे पुत्रेणैव स्वर्गसदृशसुखस्य प्रादुर्भावसम्भवात् पुत्र एव गृहस्थाश्रमस्याधार इति, स च पुत्रो रजोमूलो भवति रजसः समयाधीनत्वादतः प्रथमरजोदर्शनाधिकरणकमासादिफलमाह ज्योतिश्चिन्तामणौ—

प्रथमर्त्तौ मधौ नारी विधवा भवति ध्रुवम् ।
वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता भवेत् ।
आषाढे च मृतापत्या श्रावणे च धनान्विता ।
भाद्रे च दुर्भगा ज्ञेया ह्याश्विने च तपस्विनी ॥
ऊर्जे ह्यायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पौषे तु पुंश्चली नारी माघे पुत्रसुखान्विता ॥
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥

तिथिफलम्—

शुचिर्नारी प्रतिपदि द्वितीयायां तु दुःखिनी ।
तृतीयायां पुत्रवती चतुर्थ्यां विधवा भवेत् ॥
पञ्चम्यां चैव सौभाग्यं षष्ठ्यां कार्य्यविनाशिनी ।

१. विवाहे वधूप्रवेशे ॥ २. पितृगृहे स्त्रीणां यदा कुचावुत्पद्येते, तथा पुष्पसम्भवः ऋतुधर्म्मो भवेत्तदा न शुक्रदोषः ।



सप्तम्यां सुप्रजा नारी अष्टम्यां राक्षसी तथा ॥
नवम्यां विधवा नारी दशम्यां सौख्यभागिनी ।
एकादश्यां शुचिर्नारी द्वादश्यां मरणं ध्रुवम् ॥
त्रयोदश्यां शुभा प्रोक्ता चतुर्दश्यां परान्विता ।
पूर्णिमायाममायां च शुभं चाशुभमेव च ॥

दिवसफलम्—

आदित्ये विधवा नारी सोमे चैव मृतप्रजा ।
[1]क्षोणिपुत्रे आत्मघाती बुधे कन्याप्रसूः स्मृता ॥
गुरुवारे सुतप्राप्तिः कन्यापुत्रयुता भृगौ ।
मंदे च[2] पुंश्चली नारी ज्ञेयं वारफलं बुधैः ॥

कालफलम्—

पूर्वाह्ले सुभगा प्रोक्ता मध्याह्ले चैव निर्धना ।
अपराह्ले शुभा चैव सायाह्ले सर्वभोगिनी ॥
संध्ययोरुभयोर्वेश्या निशीथे विधवा भवेत् ।
पूर्वरात्रौ तथा बन्ध्या दुर्भगा सर्वसंधिषु ॥

अथास्याः स्पृश्यास्पृश्यात्वे आह ज्यौतिषे—

चतुर्थेऽहनि सास्पृश्या रजोदर्शनतः स्त्रियः ।
पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि ॥
प्रथमेऽहनि चांडाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ॥

विशेषमाह वैद्यशास्त्रे—

आर्त्तवस्रावदिवसादहिंसा ब्रह्मचारिणी ।
शयीत दर्भशय्यायां पश्येदपि पतिं न च ॥
कटे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत् ।
अत्युच्चशब्दश्रवणं हसनं बहुभाषणम् ॥
आयासं भूमिखननं प्रवासं परिवर्जयेत् ॥ इति ॥

१. 'आत्मघातकरी भौमे' एवं पाठः साधुः, इति तीर्थचरणाः ।
२. मन्दे शनौ । पुंश्चली—कुलटा—असतीति यावत् ।

स्नानमाह-रजःपाताच्चतुर्थेऽह्नि स्त्रिया सुभगया सह ।
स्नायादवश्यं तिथ्यृक्षं वारादीन्नावलोकयेत् ॥

अथ प्रसूतीस्नानदिवसमाह—
[1]हस्ताश्विनीत्र्युत्तररोहिणीषु मृगानुराधापवनान्त्यभेषु ।
स्नायात्प्रसूता गुरुभानुभौमे त्यक्त्वा हरेर्वासरमष्टषष्ठीम् ॥

अन्यच्च—[2]पौष्णध्रुवेन्दुकरवातहयेषु सूती
स्नानं समित्रभरवीज्यकुजेषु शस्तम् ।
नार्द्रात्रयं श्रुतिमघान्तकमिश्रमूल-
त्वाष्ट्रे ज्ञसौरिवसुषड्रविरिक्ततिथ्याम् ॥

अथ शिशोर्म्मातुः स्तनपानदिवसमाह—
रिक्ताभौमं परित्यज्य विष्टि[3] पातं सवैधृतिम् ।
मृदुध्रुवक्षिप्रभेषु स्तनपानं हितं शिशोः ॥

लाक्षाभरणदिवसमाह—ज्यौतिषे—
यमो भद्रा तथा रिक्ता विशाखा शततारका ।
पितृभं सौरिर्भूमिजो रविः सर्पः सदा स्त्रिया ॥
त्याज्या हि लाक्षाभरणे पतिजीवितकाम्यया ॥[4]

अथ स्त्रीणां चुह्लिकोपरि भांडस्थापन—स्नानदिवसमाह—
चुह्लिकोपरि मृद्भांडं स्थापयेन्नैव कामिनी ।
भृगुचंद्रमसोर्वारे स्नायान्नैव च[5] वारुणे ॥

### अथ षोडशाब्दीयनिर्णयः ।

तत्र पञ्चदशाब्दषोडशाब्दयोर्गर्भधारणे विशेषमाह—
राजमार्त्तण्डे—षोडशाब्दे गर्भधरा ह्यष्टमासप्रसूतिका ।

१. पवनः स्वाती । अंत्यो रेवती । हरेर्वासरं द्वादशी ।
अष्टषष्ठीम्—अष्टमीं षष्ठीं चेति यावत् ।
२. पौष्णो रेवती । इन्दुः मृगशिराः । करो हस्तः । हयोऽश्विनी ।
मित्रमनुराधा । अन्तको भरणी । त्वाष्ट्रे चित्रायाम् ॥
ज्ञो बुधः । सौरिः शनिः । वसवोऽष्टमी । षट षष्ठी ।
रविर्द्वादशी । रिक्ता ४-९-१४ तिथिः । ३. विष्टिर्भद्रा, भद्राज्ञानमुक्तमेव ॥
४. यमो भरणी । पितृभं मघा । सौरिः शनिः । ५. शतभिषायाम् ।



उभयोर्मरणं वाच्यं सत्याचार्यः प्रभाषते[1] ॥ १ ॥
अब्दे पंचदशे गर्भे प्रसवः षोडशेऽपि वा ।
दंपत्योर्हि विनाशः स्यादेकस्मिन्नेकनाशनम् ॥ २ ॥
षोडशाब्दे गता नारी भवेद्गर्भसमन्विता ।
अग्रतो म्रियते माता पश्चात् पुत्रो विनश्यति ॥ ३ ॥

अथ शांतिः—
[2]दद्याद्गर्भवतीं छागीं वस्त्रालङ्कारभूषिताम् ।
पुंसवनविधानेन संक्रमे शिवसन्निधौ ॥
गौरीं सुसम्यक् संपूज्य काञ्चनीं कांस्यभाजने ।
दासीं गर्भवतीं दद्याद् दैवज्ञाय च गोयुताम् ॥

अथोपनयने गुरुशुद्धेरावश्यकताऽतो गुरुशुद्धिमाह ज्योतिषे—
[3] श्रेष्ठो गुरुस्त्रिकोणाय द्विसप्तस्थानसंस्थितः ।

१. या नारी षोडशाब्दे गर्भं विधत्ते प्रसूतिका चाष्टमासे भवति तत्रोभयोर्मरणमिति सत्याचार्यः प्रभाषते । इति प्रथमकल्पः ॥ १ ॥ या नारी पञ्चदशाब्दे गर्भं दधाति षोडशाब्दे प्रसूतिका तत्र दम्पत्योर्विनाशः स्याद्यत्र चैकस्मिन्वर्षे (षोडशे) सगर्भा प्रसूतिका च तत्र दम्पत्योरेकविनाश इति द्वितीयकल्पः ॥ २ ॥ या नारी षोडशाब्दे गर्भं विधत्ते प्रसूतिका षोडशाब्दे सप्तदशाब्दे वा तत्राग्रतो माता म्रियते पश्चात्पुत्रो विनश्यतीति तृतीयकल्पः ॥ ३ ॥

अत्रेयं व्यवस्था—षोडशाब्दगर्भाधिकरणकषोडशाब्दीयाष्टमासप्रसवो दुष्टः ॥ पञ्चदशाब्दगर्भाधिकरणकषोडशाब्दीयप्रसवो दुष्टः । स्वतन्त्रेण वा षोडशाब्दीयप्रसवो दुष्टः ॥२॥ षोडशाब्दाधिकरणकगर्भो दुष्टः ॥३॥ शांत्या सर्वत्र सत् स्यादित्यन्यदेतत् ॥

यत्तु पञ्चदशाब्दे गर्भधरा नारी पञ्चदशाब्देऽपि वा षोडशाब्दे प्रसूतिका चेद्दुष्टा, षोडशेऽपि वेत्यत्रापि वेतिबलात् , एकस्मिन्निति पददर्शनाच्चेति तदपि 'स्वपि वा पादपूरणे, इति कोषबलेन तत्र अपि वेति निरर्थकत्वात् पादपूरणार्थकत्वाद्वा, एकस्मिन्नित्यस्य षोडशाब्द इत्यर्थकत्वात् षोडशाब्दीयेत्यन्वर्थनामस्वीकाराच्च परास्तम् ॥

२. शांतौ छागी गर्भवती, कांस्यभाजनस्थां काञ्चनी गौरी, गर्भवती दासी, गौश्चैतानि विहितानि । तेषामभावे तत्तन्मूल्यं वा ग्राह्यं गौरी तु काञ्चनमय्येव, गर्भजन्याधिकं मूल्यमित्यन्यत् , छागीमूल्यं विंशतिपणाः पञ्चाणका इति यावत् । दासीमूल्यं पञ्चकार्षापणाः सपादरुप्यकमिति यावत्, गोमूल्यं चतुःकार्षापणं रुप्यकमेकमिति यावदाढ्यानाम् । कार्षापणद्वयं ( अष्टावाणकाः ) मध्यमानाम्, कार्षापणमात्रमाणकचतुष्टयं दरिद्राणाम्, कार्षापणः षोडशपणा इति ॥

३. नन्वयं विचारो जन्मलग्नत उत जन्मराशित इति चेत्—'बटुकन्याजन्म-

१ २ ८ ४
[1] रिष्फाष्टतुर्य्यगं हित्वा मध्यमोऽन्येषु वेश्मसु ॥

आद्ये तृतीयभवने रिपुरंध्रयोर्वा दुःखं करोति नियतं विपदं च जीवः।
अन्त्यं चतुर्थदशमं प्रवदन्ति मध्यं क्षेमं करोति नियतं परिशेषराशौ ॥

अन्यच्च—

जन्माष्टमारिसहजोपगतः सुरेज्यो मृत्युं व्रतोपनयने विदधाति नूनम्।
अन्त्योपगे च नियतं दशमे चतुर्थे द्रव्यक्षयं प्रकुरुते विसुखत्वमेति ॥

अथ वृक्षरोपणदिवसमाह—

शुक्लपक्षे तिथौ शस्ते शुक्रे चन्द्रे गुरावपि।
तरूणां रोपणं शस्तं ध्रुवक्षिप्रमृदूडुभिः ॥

मन्त्रः—वसुधेति सशीतेति पुण्यदेति धरेति च।
नमस्ते सुभगे नित्यं द्रुमोऽयं वर्धतामिति।

कदलीरोपणे विशेषमाह—

शीम्यन्तास्तिथयः कुजार्कशनयो वाराश्च षष्ठीयुता
मासः प्रौष्ठपद[2] त्रिविक्रम[3] मुखं नक्षत्रषटकं तथा।
त्यक्त्वैतान् वृषसिंहवृश्चिकघटेष्वंगे[4] षु भद्रां विना
गर्गाद्याः कदलीक्षुरोपणविधिं शस्तं जगुः सर्वदा ॥

अथ वास्तुभूमिज्ञानम्—

चरणात्कर्णपर्य्यन्तं दण्डं कुर्य्यात्प्रमाणतः।
पूर्वतः पश्चिमं यावदुत्तराद्दक्षिणं तथा ॥
तयोश्च दण्डयोर्योगं कृत्वा भूमौ विलिख्य तम्।
वसुभिश्च हरेद्भागं शेषं स्थानाधिपो भवेत् ॥
प्रथमं रजकस्थानं चन्द्रवत्फलमादिशेत्।

---

राशेस्त्रिकोणाय द्विसप्तगः। श्रेष्ठो गुरुः, खं षट्त्र्याद्य पूजयाऽन्यत्र निन्दितः, इति मुहूर्त्तचिन्तामणिवचनात् जन्मराशित इति ॥

१. ननु रिष्फाष्टतुर्यगं हित्वेत्यनेनान्त्यचतुर्थौ निषिध्येत, अन्त्यं चतुर्थदशमं प्रवदन्ति मध्यमित्यनेन तौ मध्यमत्वेन विधीयेते, इत्यनयोर्विरोधत्वादप्रामाण्यं स्यादिति चेन्निषेधवचनं दाक्षिणात्यानां, मैथिलास्तु न मन्यन्ते तदित्यवधार्यम्।

२. प्रोष्ठपदो भाद्रः। ३. त्रिविक्रमः श्रवणा, ततस्त्रिविक्रममुखं नक्षत्रषट्कं श्रवणादिषट्कमित्यर्थः। ४. अङ्गेषु लग्नेषु।



द्वितीये चर्मकारस्य क्षुधायाः परिपीडितः ॥
तृतीये ब्राह्मणस्थानं सद्मनोद्वेगकारकम्[1]।
चतुर्थे शूद्रकस्थानं धनधान्यप्रदायकम् ॥
पञ्चमे योगिनः स्थानं महदौदास्यकारकम्।
षष्ठे गोपालकस्थानं सर्वसिद्धिप्रदायकम् ॥
सप्तमे क्षत्रियस्थानं सदा युद्धकरन्नृणाम्।
अष्टमे चक्रिणः स्थानं मरणं रोगकारकम् ॥ इति ॥

अथ जन्मकालिकविचारः—

जन्मकाले सामयिककालबोधकयन्त्रेण[2] ज्ञातवादनं[3] सार्धद्वयेन गुणयित्वा येऽङ्कास्स्युस्ते दण्डपलौ स्याताम्, एवं च जन्मकाले[4] दण्डादिरूपमिष्टकालज्ञानं सुगमम्।

अथ तावद्द्वादशलग्नानां पलक्रमेण मानमाह—

८ १ २ १ ५ २ ३ ३ ३ ४ ३
अष्टेन्दुपक्षाः शशिबाणपक्षा गुणाभ्ररामा गुणवेदरामाः।
७ ४ ३ ८ ३ ३
शैलाब्धिरामा वसुरामरामाः क्रमोत्क्रमान्मेषतुलादिमानम्।
ततो—भुक्तिर्म्मेषे[5] झषे सप्त पलाष्टौ* वृषकुम्भयोः।

---

१. 'तत्सद्मोद्वेगकारकम्' इति पाठः साधुः।
२. घड़ीति लोके प्रसिद्धः। ३. घण्टामिनट इति लोके प्रसिद्धः।
४. घण्टेति वादनस्थाने दण्डात्मकं, मिनटेति वादनस्थाने पलात्मकं गुणनफलं ज्ञेयम्। षष्टि (६०) पलात्मको दण्डो बोध्यः। सार्धद्वयदण्डात्मको लोके घण्टेति शब्देन व्यवह्रियते, तथा सार्धद्वयपलात्मको मिनटेति शब्देन व्यवह्रियते। मेषादीनां लग्नानां पलक्रमेण मानमुक्त मूले तानि पलानि षष्ट्या विभज्य येऽङ्का लभेरंस्ते दण्डपलौ भवेताम्। तौ स्पष्टप्रतिपत्तये निर्द्दिशति संग्रहीता—

| लग्ननाम क्रमेण | लग्ननाम उत्क्रमेण | पलानि (मानम्) | दण्डपलौ (मानम्) |
|---|---|---|---|
| १ मेषः | ।१२ मीनः | २१८। | ३।३८ |
| २ वृषः | ।११ कुम्भः | २५१। | ४।११ |
| ३ मिथुनम् | ।१० मकरः | ३०३। | ५।३ |
| ४ कर्कः | ।९ धनुः | ३४३। | ५।४३ |
| ५ सिंहः | ।८ वृश्चिकः | ३४७। | ५।४७ |
| ६ कन्या | ।७ तुलः | ३३८। | ५।३८ |

५. झषे मीने। * 'तथाष्टौ' इति पा० सा०

मकरे मिथुने पङ्क्तिः[1] पलान्येकादशापरे ॥

इत्यनया रीत्या लग्नं स्थिरं कुर्यात्। तद्यथा—मीनमेषयोः सप्त, वृषकुम्भयोरष्टौ, मकरमिथुनयोर्दश, शेषराशीनामेकादश पलानि गुणकः। तत इष्टसमये[2] सूर्यांशतले रविनिष्ठराशेर्येंऽशा गतास्तान्, यस्मिन्राशौ रविस्तद्राशिगुणकेन गुणयित्वा येऽङ्काः स्युस्तान् स्वस्वराशिमानेषु विशोध्य शेषराशिमानपलानि षष्ठ्या विभज्य लब्धाङ्का दण्डपलौ भोग्यौ भवतस्तौ तदग्रिमलग्नानां मानेषु चेष्टदण्डावधिं यथायथं संयोजयेत्। एवं कृते हीष्टं यस्य राशे ( लग्नस्य ) रुदयमानमध्ये पतितं स एव राशिर्लग्नमिति निश्चयः ॥

इत्येतन्मतं स्थूलरीत्या संक्षेपेण च निर्दिष्टं, सूक्ष्मं दिदृक्षुभिः पंचांगस्थितलग्नसारिण्यां द्रष्टव्यम्। उदाहरणं च वक्ष्यते ॥

किं च तत्कालीन[3] रविग्रहेऽयनांशं संयोज्य भुक्तभोग्यादिप्रकारेण लग्नं साधयेदिति सूक्ष्ममतम् ॥

अथ लग्नं स्थिरीकृत्य यस्मिन्राशौ यदंशेन ये च ग्रहास्तथातथं सुस्पष्टं तत्र तत्र तान् संस्थाप्य जन्मकुण्डलीं निर्मापयेत् ॥

अथ कुण्डलीस्थद्वादशकोष्ठानां लग्नतो यथाक्रमं संज्ञामाह—

तनु–धन–सहज–सुहृत्–सुत–रिपु–जाया–मृत्यु–धर्म–कर्म–आय–व्यया इति ॥

अथ राशिस्वामिज्ञानमाह—

मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाधिपः।
बुधः कन्यामिथुनयोः कर्कस्वामी च चन्द्रमाः ॥
स्वामी मीनधनुर्जीवः[4] शनिर्मकरकुंभयोः।
सिंहस्याधिपतिः सूर्यः कथितो गणकोत्तमैः ॥
कन्याया राहुराख्यातः केतुर्वै मिथुनस्य च ॥

उच्चनीचभवनविचारमाह—ग्रहान् प्रकृत्य तत्रैव—

मेषे रविर्वृषे चन्द्रो मृगे[5] भौमः स्त्रियां बुधः।

१. पंक्तिर्दश। २. १ पञ्चाङ्गे इति शेषः।
३. तत्कालीनरविग्रहे जन्मकालिकरविग्रहे।
४. 'जीवो मीनधनुःस्वामी' इति केचित्। ५. मृगे–मकरे।



कर्क्के गुरुर्झषे शुक्रो घटे सौरिः स्वतुंगगः[1] ॥

१० ३ २८ १५ ५ २७ २०
दिग्भिर्गुणैर्नागयमैः शराब्जैः प्राणैश्च ताराप्रमितैर्नखांशैः।
परोच्चगाः सूर्यमुखाः क्रमेण नीचाः स्वतुंगास्तभसंस्थिताश्चेत्।

अन्यच्च—

मेषे रविर्वृषे चन्द्रो मकरे च महीसुतः।
कन्यायां रोहिणीपुत्रो गुरुः कर्क्के झषे भृगुः ॥
शनिस्तुलायामुच्चस्थो मिथुने सिंहिकासुतः।
उच्चात्सप्तमगो नीचः कथितो गणकोत्तमैः ॥

उच्चं नृयुग्मं घटभं त्रिकोणं कन्यागृहं सौरिसितामरेज्याः।
मित्राणि सूर्येन्द्ववनीतनूजा द्वेष्याश्च राहोः खयमाः परांशाः[2] ॥
सिंहस्त्रिकोणं धनुरुच्चसंज्ञं मीनो गृहं शुक्रशनी विपक्षौ।
कुजार्कचन्द्राः सुहृदः समाख्यौ जीवेन्दुजौ षट्शिखिनः परांशाः[3] ॥

अथ केन्द्रादिसंज्ञामाह—

लग्नस्थानस्य–सप्तमस्य–दशमचतुर्थयोश्च–केन्द्र,–चतुष्टय,–कंटकेतिसंज्ञा। यथा ज्योतिःसारे—

केन्द्रचतुष्टयकंटकसंज्ञा लग्नास्तदशमचतुर्थानाम्।

नवपंचमयोश्च त्रिकोणेति संज्ञा, यथा 'भवति नवपंचमं त्रिकोणम्' ॥

अथ ग्रहदृष्टिमाह—

३ ५ ४ ८ ७
त्र्याश त्रिकोणा चतुरस्त्रमस्तं पश्यन्ति खेटाश्चरणाभिवृद्ध्या ॥

अन्यच्च—

पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः।
चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च ॥

अथ शुभाशुभग्रहानाह—

जीवः शुक्रो बुधश्चन्द्रः शुभाख्यो हि ग्रहः स्मृतः।

१. घटे कुम्भे, स्वतुंगगः स्वोच्चस्थः।
२. नृयुग्मं मिथुनम्। घटभं–कुम्भस्थानं, त्रिकोणं मूलत्रिकोणमित्यर्थः ॥ सितः-शुक्रः। अमरेज्यो गुरुः सूर्यः, इन्दुः, अवनीतनूजो भौमः ॥
३. शिखिनः केतोरित्यर्थः।

शनैश्चरो महीसूनुः सूर्यः पापाभिधो भवेत् ॥
सैंहिकेयस्तथा केतुः पापश्चोपग्रहो भवेत् ॥

अथ ग्रहाणां मित्रामित्रसमानाह—

शत्रू मंदसितौ समश्च शशिजो मित्राणि शेषा रवेः
तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥
सूरेः सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो
ये प्रोक्ताः स्वत्रिकोणभादिषु पुनस्तेऽमी मया कीर्तिताः ॥

अत्र विशेषमाह—

यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानिर्निर्दिष्टव्या पृच्छतो जन्मतो वा ॥

अथ केन्द्रस्थितग्रहाणां फलानि—

किं कुर्वन्ति ग्रहास्सर्वे यस्य केन्द्रे बृहस्पतिः ।
मत्तमातंगयूथानां शतं हन्ति च केसरी ॥
शुक्रो दश सहस्राणि बुधो दश शतानि च ।
लक्षमेकं तु दोषाणां गुरुर्लग्ने व्यपोहति ॥
शुक्रो यस्य बुधो यस्य यस्य केन्द्रे बृहस्पतिः ।
दशमोऽङ्गारको यस्य स जातः कुलदीपकः ॥

अत्रैव निन्दामाह—

शुक्रो नास्ति बुधो नास्ति नास्ति केन्द्रे बृहस्पतिः ।
दशमोऽङ्गारको नास्ति स जातः किं करिष्यति ॥

अत्र विशेषमाह—

एकोऽपि केन्द्रभवने नव पंचमे वा भास्वन्मयूखविमलीकृतदिग्विभागः ।
निश्शेषदोषमपहृत्य शुभं करोति दीर्घायुषो विगतरोगभयं करोति ॥
एकोपि शुभग्रह इति शेषः ॥



स्वगृहफलम्—

स्वगृहस्थे रवौ लोके महोग्रश्च सदोद्यमी ।
चन्द्रे कर्मरतः साधुर्मनस्वी रूपवानपि ॥
स्वगृहस्थे कुजे चन्द्रे चपलो धनवानपि ।
बुधे नाथ कथाऽभिज्ञः पण्डितो धनवानपि ॥
धनी कांतः श्रुतज्ञश्च सदेष्टः स्वगृहे गुरौ ।
स्फीतः कृषीवलः शुक्रे शनौ मान्यः सुलोचनः ॥

मित्रगृहफलम्—

सूर्ये मित्रगृहे ख्यातः शास्त्रज्ञः स्वस्थसौहृदः ।
चन्द्रे नरो भाग्ययुक्तश्चतुरो धनवानपि ॥
भौमे शस्त्रोपजीवी च बुधे रूपधनान्वितः ।
गुरौ मित्रगृहे पूज्यः सतां सत्कर्मसंयुतः ।
शुक्रे मित्रगृहे लोके धनी बन्धुजनप्रियः ॥
शनौ रुजाकुलो लोके कुकर्मनिरतो भवेत् ॥

शत्रुगृहफलम्—

सूर्ये रिपुगृहे नीचो विषयैः पीडितो नरः ।
चन्द्रे हृदयरोगी च भौमे तेजा जडोधनः ॥
बुधे रिपुगृहे मूर्खो वाङ्मनोदुःखपीडितः ।
जीवे च जायते क्लीबो नाशवृत्तिर्बुभुक्षितः ॥
शुक्रे शत्रुगृहे भृत्यः कुबुद्धिर्दुःखितो नरः ।
शनौ व्याध्यर्थशोकेन संतप्तो मलिनो भवेत् ॥

गण्डोद्भवफलम्—

स्वकार्यकर्त्ता परकार्यहर्त्ता गंडोद्भवः स्यादतिगण्डवाक्यः ।
अत्यंतधूर्त्तः पुरुषः कुरूपः सुहृद्गणानामपि तापदाता ॥

[1]गण्डज्ञानम्—

३ ४ ९
अश्विनीमघमूलादौ त्रिवेदनवनाडिकाः ।
१२ ११ ६
रेवतीसर्पशंक्रान्ते मासरुद्ररसास्तथा ॥

---

१. अश्विन्यादिनक्षत्राणां भागविशेषो दोषजनकः स एव गण्ड इति शब्देन लोके व्यवह्रियते, यथा—

अत्र विशेषमाह—

मूलेन्द्रयोर्दिवागण्डो निशायां मघसर्पयोः ।
अश्विनीरेवतीजातः संध्यागण्डः प्रकीर्त्तितः ॥

तत्र दोषः—संध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः ।

आत्मानं मातरं तातं विनिहन्ति यथा क्रमम् ॥
दिवा जाता तु या कन्या निशि जातस्तु यः पुमान् ।
नोभयोर्गण्डदोषः स्यान्नाचलो हन्ति पर्वतम् ॥
सर्वेषां गण्डजातानां परित्यागोऽभिधीयते ।
तातेनादर्शनं वापि यावत्षाण्मासिको भवेत् ॥

अथाभुक्तमूलज्ञानम्—

अभुक्तमूलं घटिकाचतुष्टयं ज्येष्ठान्त्यमूलादिभवं हि नारदः ।
वशिष्ठ एकद्विघटीमितं जगौ बृहस्पतिस्त्वेकघटीप्रमाणकम् ॥
आद्ये पिता नाशमुपैति मूलपादे, द्वितीये जननी, तृतीये ।
धनं, चतुर्थोऽस्य शुभोऽथ शांत्या सर्वत्र सत्स्यादहिभे विलोमम् ॥
अथोचुरन्ये प्रथमाष्टघट्यो मूलस्य शाक्रान्तिमपञ्च नाड्यः ।
जातं शिशुं तत्र परित्यजेद्वा मुखं पितास्याष्टसमा न पश्येत् ॥

अथारिष्टयोगानाह—

सूर्य्याच्च नवमे तातश्चन्द्रान्माता चतुर्थगः ।
भौमाच्च तृतीयो भ्राता बुधा[1]त्षष्ठो हि मातुलः ॥
गुरोः पंचमतः पुत्रो भृगुः सप्तमतः स्त्रियः ।
शनेरष्टमतो मृत्युर्यदा क्रूरो भवेद्ग्रहः ॥
सूर्यो भौमस्तथा राहुः शनिर्मूर्त्तौ यदान्वितः ।
संतापो रक्तपीडा च सौम्यैः सर्वनिरोगतः ॥

गण्डमानन्तु १५ दण्डः ।

| नक्षत्रनाम | भागदं० (अन्ते) | भागदं० (आदौ) | नक्षत्रनाम |
|---|---|---|---|
| 'रेवती | १२, | '३ | अश्विनी, |
| 'अश्लेषा | ११, | '४ | मघा, |
| 'ज्येष्ठा | ६, | '९ | मूलम्, |

१. अत्र केचित्-बुधात् पापग्रहश्चतुर्थश्चेत्तदा मातुलो मृत्युमवाप्नुयादिति तन्न प्रामाणिकवचनविरोधाद् व्यवहारविरोधाच्चेति ॥



भौमक्षेत्रे यदा जीवो जीवक्षेत्रे च भूसुतः ।
द्वादशे वत्सरे मृत्युर्बालकस्य न संशयः ॥
षष्ठेऽष्टमे वा चन्द्रः सद्यो मरणाय पापसंदृष्टः ।
अष्टाभिः शुभदृष्टैर्वर्षैर्मिश्रैस्तदर्धेन ॥

५ ७ ९ १२ १ ८
सुतमदननवान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः ।
भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥

अपुत्रं कुरुते भानुः पुत्रमेकं निशाकरः ।
सशोकं पुत्रहीनं च पंचमो धरणीसुतः ॥

सहजपतिर्यदि सहजे सुतधनहिबुकाद्यसंस्थितोऽप्यथ वा ।
न भवति सहजोत्पत्तिर्यदि भवति न जीवति कदापि ॥

अस्तं गते पञ्चमेशे पापाक्रान्ते च दुर्बले ।
नापत्यं जायते तस्य जायते म्रियते शिशुः ॥

ग्रन्थविस्तारभयात्संक्षेपेण ह्यरिष्टयोगानुक्त्वाऽधुना फलविशेषं निर्वक्ति,—अधिकं जिज्ञासुभिर्मानसागर्यादौ द्रष्टव्यम्,

पंचमाधिपतिः केन्द्रे त्रिकोणे वा शुभैर्युतः ।
तदा पुत्रसुखं सद्यो विलोमेन विलम्बतः ॥
भौमस्थानगतः सौरिर्वैकुण्ठादागतो नरः ।
राज्यं कृत्वा महीं भुक्त्वा पुनस्तत्रैव गच्छति ॥

अथ जन्मकालीनलग्नानयनोदाहरणम्—

वसूदधिनागेन्दुप्रमिते (१८४८) शके द्वितीयचैत्रशुक्लनवम्यां बुधेऽष्टाधिकदशवादनसमये (१०।०८) दिने चन्द्रदेवस्य प्रथमः पुत्रो जातः । तमेव समयमधिकृत्य विचार्यते, अयं च वादनसमयः कुतः कस्मात्कथं समयात् इति चेद्, भौमरात्रेर्द्वादशवादनसमयतः । एवं च घंटात्मकं दशवादनं सार्द्धद्वयेन गुणितं सत् पंचविंशतिदण्डान्, तथा मिनटात्मकमष्टवादनं सार्द्धद्वयेन गुणितं सत् विंशतिपलानि बोधयति । ततश्चानयो (२५।२०) र्दण्डपलयोः कुजवासरस्य चन्द्रपलाधिकचतुर्दशदण्डमितं (१४।०१) रात्र्यर्धं वियोज्यावशिष्टावेकादशैकोनविंशतिसंख्याकौ दण्डपलाविष्टकालो बोध्यः (११।१९) ।

अथवाऽष्टाधिकदशवादनसमये षट्त्रिंशदधिकपंचवादनं (५।३६)

घंटामिनटात्मकमिदं बुधदिवसीयोदयकालं वियोज्यावशिष्टं ( ४।३२ ) द्वात्रिंशदधिकचतुर्वादनं सार्द्धद्वयेन गुणितं सत् ( ११।१६ ) मितमिष्टं बोधयतीति ।

अथ लब्धेष्टकाले लग्नं विचार्यते ।

अथोक्तसमये मेषार्क्कस्याष्टावंशाः ८ । दशकलाः १० । द्वात्रिंशत् ३२ विकला भुक्तिर्याता ।

ततो 'भुक्तिर्मेषे झपे' इत्युक्तरीत्याऽष्टौ सप्तभिर्गुणयित्वा षट्पंचाशदिति ( ५६ ) अंशस्थाने, । दश सप्तभिर्गुणयित्वा सप्ततिरिति ( ७० ) कलास्थाने, । द्वात्रिंशत् सप्तभिर्गुणयित्वा विकलास्थाने वेदकरपक्षमितं ( २२४ ) गुणनफलम् । ततो विकलास्थानीयगुणनफलं ( २०४ ) मितं षष्ट्या भक्तं लब्धाङ्कस्त्रिः ( ३ ) शेषस्तु चतुश्चत्वारिंशत् ( ४४ ) परंत्वत्रार्धाधिके रूपं ग्राह्यं तदल्पे त्याज्यमिति नियमेन चतस्रो लब्धिः ( ४ ), ताः कलास्थानीयगुणनफले सप्ततौ ( ७० ) संयोज्य चतुःसप्ततिमिन ( ७४ ), कलास्थानीयगुणनफलं पुनः षष्ट्या भक्तं लब्धिरेका(१) शेषश्चतुर्द्दश ( १४ ), शेषस्त्वत्र त्याज्यस्त्रिंशतो न्यूनत्वात् । एवं च लब्धिमिमां चन्द्ररूपाम्(१), अंशस्थानीयगुणनफले ( ५६ ) षट्पञ्चाशन्मिते संयोज्य सप्तपञ्चाशन्मितानि ( ५७ ) पलानि भुक्तेर्मानम् । अत्र षष्ट्या भक्तं चेल्लब्धिः शून्यम् (०), शेषः सप्तपञ्चाशन्मितं पलं बोध्यम् । ( ०।५७। )

एवं चोक्तरीत्या सप्तपञ्चाशन्मितं मेषभुक्तेर्मानं वसुभूमिकरमिते ( २१८ ) मेषमाने पले विशोध्यावशिष्टानि भूतर्केन्दुमितानि (१६१) पलानि मेषस्य भोग्यानि षष्ट्या विभज्य द्वौ दण्डौ (२), एकचत्वारिंशत् पलानि (४१) उदयतो मेषमानम्, ततोऽस्मिन् वृषमानं चतुरो दण्डान्–एकादश पलानि ( ४।११ ) संयोज्य षट् दण्डा द्विपञ्चाशन्मितानि पलानि मेषवृषयोर्मानम् ( ६।५२ ) । अस्मादधिकमिदम् ( ११।१६ ) दण्डपलात्मकमिष्टं, मिथुनमान ( ५।३ ) मध्ये पतितं तेन मिथुनं लग्नं संयातं तस्य जातकस्येति ।

एवमन्यत्राप्यूह्यम् ।

एकादश्युपवासे विशेषमाह विष्णुः—

**सूर्ये वा सूर्यपुत्रे वा धरणीसुतवासरे ।**



निराहारं न कुर्वीत यदीच्छेत्पुत्रजीवनम् ॥
मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
निर्जलायां तथा भीष्मे वारदोषो न विद्यते ॥

ग्रहणदर्शनफलमाह ज्योतिषे—

स्वजन्मराशेस्तृतीयषडेकादशदशमराशिस्थितं ग्रहणं शुभप्रदम् । द्वितीय–सप्तम–नवम–पंचमस्थानस्थितं मध्यमम् । जन्म–चतुर्थाष्टम–द्वादशराशिस्थितमनिष्टप्रदमिति काशीनाथोपाध्यायचरणाः ॥

'त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः ।
द्विसप्तनन्देषुसुमध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनीन्द्रैः ॥'

आय एकादश । नन्दा नव । इषुः पञ्चेति म० म० कमलाकरः ॥

राशौ यत्र विधुन्तुदेन तरणिश्चन्द्रोऽथवा ग्रस्यते ।
४ ३ ११ ६
तस्माद्वेदहुताशरुद्ररसगाः कल्याणदा राशयः ॥
१२ ९ ५ १०
मध्यस्था रविरङ्कबाण दशगाः सामान्यभोगप्रदाः ।
२ १ ७ ८
युग्मे ब्रह्मतुरङ्गमृत्युभवने नेष्टं फलं यच्छते ॥

इति मैथिलसंप्रदायानुसारिणः ॥

व्रतादौ सार्षपतैले प्रथमभागे दोषाभावमुक्त्वाऽधुना तैलदोषशान्तिमाह संग्रहे—

रवौ पुष्पं गुरौ दुर्वां भूमिं भूमिजवासरे ।
भार्गवे गोमयं दद्यात्तैलदोषोपशांतये ॥

इति श्रोत्रियखण्डवलावैयाकरणकर्मकाण्डनिष्णात प० श्री रमाकांतठक्कुरेण संगृहीते पौरोहित्यकर्मसारे परिशिष्टप्रकरणं संपूर्णम् ।

शुभे शाके ह्यष्टोदधिवसुमहीभिः परिमिते,
दले कृष्णे गौरीगुरुवरतिथौ चन्द्रजदिने ।
रमाकान्तेनायं भवसुतरिमासाद्य शुशुभे,
गतो मासे राधे रचित इह चान्तं हि विदुषा ॥ १ ॥

**समाप्तश्चायं सपरिशिष्टो ग्रन्थः ।**

—०—